समानयनव्यपदेशेन यातायाते कुर्वन्ति गोकुलाद् गोपरमण्यः।

पुण्ये सत्रे मधुरमधुरं स्वादु हैयङ्गवीनं
मूर्ध्नानीतं ददति सरला गोपबालाः सलीलम्।
कामांस्तासां हृदयनिहितान् पूरयन्तु प्रसन्ना
सत्त्वोदाराः सपदि मुनयो विश्वकल्याणमज्ञाः ॥६०

भ्रातः सुबल! मन्ये आयास्यन्ति गोपरमण्यो हैयङ्गवीनविक्रयप्रसङ्गेन यथापूर्वम् अनेनैव पथा। अद्य कौतुकप्रसङ्गेन तासां गमनावरोधोऽवश्यमेव करणीयः, विशेषत आयाति चेत् सा गोपीप्रेमसारभूता भक्तिकल्पलता राधा।

सौदामिनी कपितकाञ्चन-पीतदीप्तिः
स्मेरानना विविध-भूषणभूषिताङ्गी।
साकं सखीभिरिह चेदुपयाति राधा
बाधामहं गतिपथे नियतं विधास्ये ॥६१।

सुबलः। बन्धो! पश्य पश्य, समीपमागच्छति किमपि आश्चर्यम्।

बन्धूक-पुष्प-शरदिन्दु-समन्वितस्य
किं दाडिमीफलयुगस्य हठात् प्रकाशः।
किं फुल्लचम्पकलता चपला स्थिरा वा
विद्युन्मदो किमुत काचन कानकी वा ॥६२॥

श्रीदामा। अहो रमणीयत्वं श्रीराधायाः—

सार्धत्रयोविंशति-संख्यकानां
तारापतीनां भ्रमरद्वयस्य।
रक्तोत्पलानाञ्च सखे चतुर्णां
पश्योदयं हन्त हठाद् भवन्तम् ॥६३॥

मधुमङ्गलः। अयि सुबल! कायस्थोऽस्मि, लिपिकुशलोऽस्मि; किन्तु अभोजन-दुर्बलोऽस्मि। सौन्दर्यलतया किम्? अपि सा शष्कुलक-गोलकुण्डिकादिकं वहति?

उज्ज्वलः। वहतु वा न वा, तेन तव किम् ? एताः खलु यज्ञभूमिं गन्तुकामा नार्यस्तत्रैव दास्यन्ति सर्वं वस्तुजातम्; न तास्त्वदर्थं किमपि वहन्ति।

मधुमङ्गलः। मदर्थं कथं न ? मातरमुपगम्य सन्तानो यदि वदति "सातभोक्तुमिच्छामि", अपि माता कदापि वैमत्यं प्रकटयति ? सौभाग्यान् मातर आगच्छन्ति, न पुरुषाः।

श्रीकृष्णः। (स्वगतम्) अहो ! तत्रैव एतस्य महती प्रत्याशा।

सुवलः। पश्य पश्य ! सौरकरं चतुर्गुणामुररीकृत्य विच्छुरति इत एव काचन ज्योतिर्धारा। सा पुनर्विशेषेण त्रि-धाराभिरुपबृंहिता।

(प्रविशन्ति ,राधा-ललिता-विशाखा-वृन्दा-चित्रा-चम्पकलता-तुङ्गविद्याः )

श्रीकृष्णः। (राधिकां दृष्ट्वा) अये ! वन्धवः सुवलादयः ! घट्टपथमतिक्रमितुम् इत आयान्ति गोपरमण्यः। तदुच्चैः शृङ्गं यूयं वादयत, अहं च वंशीध्वनिं करोमि।

श्रीराधा। (वंशीध्वनिं श्रुत्वा)-अहो ! महिममय एष वेणुध्वनिः—

तरुलतासु तनोति नवश्रियं
पिककुलं कुरुते कलमञ्जुलम्।
मम हि धैर्यधरस्य विदारणे
ध्रुवमयं कलयत्यशनेस्तुलाम् ॥६४॥

(ललितामुद्दिश्य) ललिते ! पश्य पश्य श्रीगोवर्धनोपरि श्यामलमण्डपस्थितं नीलहरिम् अथवा अपि स्वप्नविवशम् अक्षियुगलं मे ?

श्रीकृष्णः। (सुवलप्रभृतीनुद्दिश्य) वन्धवः ! झटित्येव मार्गावरोधं कुरुत, यथा एता गोपरमण्यो न घट्टशुल्कदानेन विना प्राप्तसरा भवेयुः।

(सुवलादयस्तथा कुर्वन्ति)

गोप्यः। किमिति यूयम् अबलानामस्माकं मार्गावरोधं कृत्वा वर्तध्वे ?

सुबलः। भवत्यो वा किमिति घट्टशुल्कम् अदत्त्वैव गन्तुं व्यवस्यन्ति ? शुल्करूपं देयमत्र अवश्यमेव देयम्।

विशाखा। यज्ञस्थानं हव्यादिद्रव्यं नयामो वयम्; यज्ञीयं वस्तु कदापि शुल्कयोग्यं न भवति। अस्तु वा भवन्मतेन शुल्कयोग्यम्, परं के वा भवन्तः शुल्कग्रहणाय ?

उज्ज्वलः। हन्त गर्विता गव्यविक्रयिण्यः! अस्य स्थानस्य राजा घोपितवान्—विना शुल्कदानं न केनापि स्थानमिदमति-क्रमणीयं पण्यवता।

( अश्रुतिमभिनीय सर्वाश्चलन्ति )

सुबलः। कीदृश्यो रमण्य एता या अवश्यश्रोतव्यविषये अवधानं न ददति।

चम्पकलता। ( सनिर्वेदं परावृत्य ) भोः! पृष्ठमांसादाः! कथं वयं युष्मद्वचनं श्रोष्यामः। यज्ञीयं वस्तु यज्ञस्थानं नेतुकामा वयं गृहेभ्यो वहिरागताः, न यस्य कस्यचिद् वचसि अवधान-प्रदानाय।

सुबलः। दानग्रहणविषये न कदापि भविष्यति शैथिल्यम्। तद् वृथा समयक्षेपमपहाय देहि अवश्यदेयम्।

विशाखा। भद्रमुखाः, मद्वचसि किञ्चिदवधानं कुरुत, पश्यन्तु भवन्तः।

शुल्कदानमृषीणाम् अहिताय स्यादेव। यतः
ददति यमिह शुल्कं पण्यवन्तो नृपेभ्यः
स हि खलु सह वृद्ध्या क्रेतुरादीयते तैः।
अथ वनशरणानाम् ऋत्विजां दैन्यहेतो-
र्हविषि दुरधिगम्ये यज्ञसिद्धिः कुतः स्यात् ? ॥६५॥

सुबलः। सर्वो यज्ञो राजनि समाप्यते; तस्मादचिरादेव हव्य-कव्य-द्रव्यशुल्कं देयम्। घट्टपालेन्द्र! शुल्कमूल्यं निर्धारणीयम्॥

श्रीकृष्णः। ( राधामुद्दिश्य ) भो गर्विणि! अनेन वन्यपथेन नित्यं

करोपि यातायातम्। वञ्चनानिपुणा नित्यं वञ्चयन्ति; किन्तु धृता भवन्ति एकदैव। अद्य त्वां मनोजराजपुरतो नेष्यामि। यावज्जीवनस्मरणीय-दण्डम् अवश्यमेव स ते विधास्यति। अथवा ललनानां शासनेऽहमस्मि समर्थः। भोः पशुपकन्याशिरोमणे! घट्टकुट्टिमपट्टनिकटे घटीं स्थापय। भो लिपिकुशल मधुमङ्गल! लिख—

चतुरधिकाशीतिमितं लक्षं शुल्कं सुवर्णमुद्राणाम्।
गोपीभिर्दातव्यं घृतपूर्ण-पञ्चगर्गरीनिमित्तम्॥६६

ललिता। हुम्, तिन्तिड़ीवृक्षे बीजरूपेण राजन्ते मुद्राः? उहुँ,—का कथा तादृशसंख्यकस्वर्णमुद्राणाम्—पञ्च ताम्रिकाण्यपि न दास्यामः।

विशाखा। घट्टशुल्कं यदि युष्माकमीप्सितं कथमत्र यूयं समागताः? अपि यमुनाघट्टो लोपं यातः? शुल्कनाम्ना दस्युता कंस-राजस्य राजत्वावसर एव शोभते।

ललिता। जीवन्त्यां ललितायां न काणं कपर्दकमपि प्राप्स्यथ।

कृष्णः। (सदर्पम्) अयि पुरुषकठिनसारे!

शुल्काप्रदानमधिकृत्य सति प्रसङ्गे
आयोधनं यदि भवेन्न वयं बिभीमः।
नारीजनैः सह पुनः समराभियोगात्
कीर्तिर्जये नास्त्यजयेऽपकीर्तिः॥६७

चित्रा। अये चोर-घट्टसंरक्षकाः! वृथा युद्धे को व्याप्रियेत। किन्तु वृथा प्रोच्चाटनहेतोश्चन्दनमपि अग्निमुद्गिरति। अन्यच्च पश्य—

न सुखिनी रमणी रणकर्मणा
परमुपैति रणं यदि दैवतः।
भवति सा महिषासुरमर्दिनी
प्रभुरहो न हि यत्र शिवः स्वयम्॥६८

श्रीकृष्णः । अलमलमतिदुःखकारिभिः
कलहपरैरपरैर्वचश्चयैः ।
वितरत सदया धनानि नो
न भवतु चन्दनमुष्णमर्दनात् ॥६९

विशाखा । अये वाकोवाक्यवागीश जम्बूलगुड़प्रिय वंशदण्डविशेष-शालिन्! धनानि प्राथम्येन अस्मभ्यं कोटिशो देहि। वृन्दावने गोचारणे धेनूश्चारयसि; राज्ञ्यै राधायै कति कपर्दकान् ददासि ?

कृष्णः । अयि विशालकोपने! 'राधा राधा राधा' इति निरन्तरोच्चारणेन 'धारा धारा' इति प्रजायते। एषैव धारा यद्वृन्दा वने गोपालकानां गोचारणे वृन्दावत्यै राज्ञ्यै कपर्दकोऽपि न देय इति।

ललिता। एषाऽपि गोवर्धनीया धारा यद् गिरि-गह्वरप्रच्छन्न-चौरेभ्यो न वृन्दावनवासिनीभिः कपर्दको दीयत इति।

सुबलः। गोवर्धनविषये वयमेवाधिकर्तारः। पुनश्च का वा वृन्दा, वनमात्रं वृन्दावनम्, अन्यतस्तु गोवर्धनगिरिर्निखिल-भुवनातिशायी। तद्वृन्दावन-गोवर्धनयोः का नाम तुलना ?

विशाखा। अये पण्डितमूर्ख, मा मैवं भण। गुहावासिनोऽपि एतज्-जानन्ति—

इन्द्रो गरीयानखिलामरेभ्य-
स्ततो गरीयान् स हिरण्यगर्भः ।
हिरण्यगर्भाच्च गरीयसी सा
लक्ष्मीस्ततोऽप्यभ्यधिकास्ति वृन्दा ॥७०

तथापि वनमात्रं वृन्दावनं भणसि ?

नाम्नैव सुबलोऽसि, न तु ज्ञानेन। शृणु रे पुनरपि,

सिद्धीनामणिमादीनां तीर्थानां तपसामृचाम् ।
सम्भृतेभ्योऽपि तेजोभ्योऽधिकं तेजोऽस्ति माथुरे ॥७१

ततोऽधिकं महत्तेजः षोडशक्रोशसम्मिते ।
वृन्दावने तथा तेजो ब्रह्माण्डे हि सुदुर्लभम् ॥८२

श्रीकृष्णः । ( सस्मितं सानन्दं ) ततोऽपि कोटीगुणगरीयः श्रीमत्या वृन्दावनेश्वर्या हृदयैश्वर्यतेजः । तदेवाहं कामये । लघुना विधिना न तद्दीयते चेद् गुरुविपयसमारोपणमवश्यमेव करिष्ये ।

विशाखा । अयि लीलामहानिकुञ्जकुञ्जरेन्द्र ! रमणीयं भणसि । अयि त्रिभङ्गभङ्गिमश्यामसुन्दर ! त्वं त्रिवक्रश्चेद् अष्ट-वक्राऽस्माकं श्रीराधा । तव वक्रत्वमादौ अन्ते मध्ये च । राधाया वक्रत्वं पुनर्वाक्ये, केशे, भ्रुवि, दृष्टौ, हास्ये, गमने, अवगुण्ठने, हृदये च । वक्रेश्वर ! वक्रेश्वरत्वप्रकटनेन न त्वं कदापि जयी स्याः ।

चम्पकलाता । ( क्लान्तिमभिनीय ) अहो मध्याह्नमार्तण्डोऽस्माकं कण्ठं करोति विशुष्कम् । ( श्रीकृष्णमभिलक्ष्य) तक्रं वाञ्छसि चेत् सायं मद्द्वारे शर्करामिश्रितं तक्रं प्रचुरं दास्यामि,—कथं वृथा समयक्षेपं करोषि ?

श्रीकृष्णः । तत् पणरूपेण श्रीराधायाः कण्ठलग्नं हारं मह्यं देहि ।
( ललितायां श्रीराधिकाया गललग्नं हारं ग्रहीतुमुद्युक्तायां तां निवार्य )

सखि ! न, न हारमुक्तं सखीकण्ठं कुरु । अस्य मध्यस्थले राजते शङ्खचूडचूडामणिः — प्रलम्बासुरहन्ता स्वयं मदग्रजो बलदेवो यं तव सख्यै अयच्छत् । स्थानभ्रष्टे मणौ बलम-णिर्बलवद्रुष्टो भविष्यति । नाहं गृहविवादं कामये ।

ललिता । तथा चेद् वनमालिन् ! तव गलस्थां वनमालां मम सख्यै देहि ।

श्रीराधिका । सखि ! मा मैवं भण । वनमालिनं माल्यहीनं कर्तुं नाहं स्वप्नेऽपि पारयामि । हे राधेश ! राधा-

हृदयोच्छ्वासिशारदपूर्णचन्द्र, मम प्रणामाञ्जलिं गृहाण। कृपयाऽस्मिन् गिरिसङ्कटस्थले तवागमनमस्माकं परमहिताय। जगन्नाथ! बुद्धिमान्द्याद् यदप्रियमाचरितं तत क्षमस्व।

विशाखा। (सरोषं छलमाश्रित्य) अयि चपले, कथं करोषि आत्मसमर्पणम्? चूडामणिविनिमयेन मालयप्राप्तिर्नास्माकमभिलषिता। तव कृष्णस्ततः कृष्णत्वविरहितो न भविष्यति।

ललिता। (छलमाश्रित्य सरोषं) हा हतास्मि मन्दभागिनी! इयमेव प्रेमविह्वला सरला कोमला राधिका सर्वथाऽस्मान् हताभिमानाः करोति। तद् यथा तथा भवतु—(विहस्य) भो घट्टचौरेन्द्रचूडामणे! तस्करपरमशरण-क्षमैकजीवन-श्रीराधिकाहेतोर्महतो दस्युकार्यापराधान्मुक्तिं लभसे। तथापि प्रियसखी-हेतोस्त्वां वयमपि स्तुमः।

(श्रीकृष्णस्तुतिः)

ललिता।

जयति जयति-यदुकुलपतिरपहृत-दुष्कृतिदर्पः।
शल-तोपल-दर्शित-बल-मर्दित-कालियसर्पः॥
जयति जयति सुरजनगतिरङ्कितगलवनमालः।
पापिनिधन-रसित-सुजन-नन्दित-गोकुलबालः॥
जयति जयति मुनिगणगतिर्वृकसुताचिरधृतिः।
वृन्दावन-मननशरण-नवनीतहरण-कृतिः॥
जयति जयति धरणी-रति-मणिमञ्जीरधारी।
गोकुलजनवरणभरण-मधु-मञ्जरीहारी॥

विशाखा।

व्रजकुलबाला-कृतवनमाला राजतु तव गलदेशे।
चरणाश्रितजन-करुणाविलोकनपटुता रटतु च शेषे॥

शुल्कसंकलन-कपटसंघटन-विगलितमानसवाधाम् ।
सुहृदपवादां धृततनुसादां कुरु तां हृदये राधाम् ॥
वृतपदकमलाः श्रितमनोबला लसन्तु हरिपदासनाः ।
गोकुलललना ललितभूषणा दयितकलितभावनाः ॥

[ सर्वे निष्क्रान्ताः ]

द्वितीयाङ्कः समाप्तः

—०—

## आनन्द-राधम्

### तृतीयाङ्कः

### प्रथमदृश्यम्

( विष्कम्भकः )

ततः प्रविशतो मधुमङ्गलः सुवलश्च।

मधुमङ्गलः । भोः सुवल ! यामिन्या अर्धं गतम्, हिमांशोः किरण-माला पूर्वां दिशं समुद्भासयति। स्वीयसमयानुसारेण प्रियवयस्यस्यागमनं बहुपूर्वमेवासीन्निर्दिष्टम्। अनेन तदा-गमनविलम्बेन चिन्ताक्लिष्टं मे हृदयम् ।

सुवलः । एष एव स्वभावो नन्दनन्दनस्य। तस्मान्नास्ति भयकारणम् । भवदावाग्निप्रशमनकारणं भवव्याधिवैद्यः सर्वार्तिमोचन-व्यग्रः किञ्चिद् विलम्बते चेत् सर्वथा तत सोढव्यम् ।

मधुमङ्गलः । [ विहस्य ] सर्वं बुद्धम्। किन्तु मन्ये विवेक एव अन्यथा वुद्धिं जनयति। श्रीराधायाः सखीकुलाग्रगण्यया वृन्दयाऽऽ-दिष्टोऽस्मि, श्रीकृष्णो यथा प्रदोषागमे श्रीराधाकुञ्जं गच्छति तदवश्यमेव विधातव्यम् इति। किन्तु सायमारभ्य यामद्वये-नापि नासौ अस्मद्दृष्टिपथचारी भवति चेद् वयं किं कुर्मः ।

सुबलः। अहो कष्टं वृकभानुसुतायाः श्रीराधायाः। वृन्दावनेश्वर्यै तस्यै नान्यत् किमपि रोचते। मुखर-जटिलादिभिर्भृशं प्रपीडिताऽपि सा श्रीकृष्णनामजपात् श्रीकृष्णाध्यानात् कथञ्चन न विरमति। गोपीकुलललामभूता सैव सत्यं श्रीकृष्णकलङ्किनी जाता। श्रीकृष्णस्य वंशीध्वनिः सर्वान् नन्दयति; तच्छ्रवणमात्रमेषा भवति बाह्यज्ञानविवर्जिता। श्रीकृष्णादर्शनेन विना नास्या हृदये कथमपि सुखं भवति।

मधुमङ्गलः। अहो दौर्भाग्यम्! सखिस्थलीं प्रतिगतः सखा चन्द्रावली-कुञ्जे समग्रां रजनीं यापयति चेत् श्रीराधायाः किं नु भविष्यति ? ततश्च।

दुराराधा राधा यदि भवति मानेन महता
धृतं दौर्लालित्यं किमु न भविता हा ललितया।
विशाखा चेच्छाखामृगयुवतिवन्नर्तनपरा
तदानन्दो वृन्दावनमचिरतस्त्यक्ष्यति सखे॥

सुवलः। अहो एतदेव श्रीकृष्णप्रेम्णः फलम्। तत्तु वाहुल्येन रोदन-मयम्। सुखैषणात्तत्परो जनो नितरां भजते दुःखम्। सखे पश्य, राधादुःखेन वनश्रीरप्यश्रु मोचयति।

द्रुमेभ्यो गुल्मेभ्यो नतदलसुमेभ्योऽपि नियतं
गलत्यस्रं राधाविरहसहजातं मुहुरहो।
किमन्तःसंज्ञानां नियतमनसां निश्चलदृशाम्
अमीषां वात्सल्यं भवति मनुजेभ्योऽपि बहुलम् ?॥

[ इति निष्क्रान्तौ ]

( ततः प्रविशन्ति विरहखिन्ना श्रीराधा सान्त्वनादानरताः सहचर्यश्च )

श्रीराधा। अहो निर्भरं दयनीयाऽस्मि यद् यमोऽपि मयि न दयते—

अकरुणः करुणावरुणालय-
स्त्वयि किमित्यभवद् भवनाविकः।

इति स संशयसङ्कुलमानसः
कलयते शमनोऽपि न मे दयाम् ॥

ललिता। वृन्दावनेश्वरि! त्वयि जीवन्त्यां जीवन्ति वृन्दावनस्था लतागुल्मतरवो गोपा गोपललनाश्च सर्वाः। त्वमेव अत्रत्यानां सर्वेषां शाश्वतं जीवनम्।

स्मितेन विकसन्ति ते कुरुवकाणि कान्तत्विषा
गतेन वहतेतरां तपननन्दिनी धारया।
तवानुकुरुते दृशं हरिणकामिनी कोटिशो
रुतेन विलसन्ति च भ्रमरगुञ्जितान्यञ्जसा ॥

विशाखा। सर्वमङ्गल्ये! तव कायव्यूहरूपा वयम्। अस्माकं सर्वासां प्राणस्पन्दनं त्वमेव। आनन्दविप्लावने तव हृदयस्य वयं सुखं निमज्जामः। त्वयि दुःखक्लिष्टायाम् अस्माकं दुःखमपि निरवधि।

श्रीराधा। कुत्रास्ते वृन्दा? अपि न सा प्रत्यावृत्ता? इत एव आयाति प्रियो मे। श्रूयते पत्रमर्मरध्वनिः। अवधानं देहि। प्राग्रेसरा भव विशाखे! तस्य प्रत्युद्गमनाय।

ललिता। अहो मर्मच्छेदि प्रियसख्युर्मे वचनम्।

श्रीराधा। विशाखे! ललिते! युवां गच्छतम्। ध्रुवमायातो मे प्रियः सखा, अन्यथा किं मे भविष्यति? जातस्य ध्रुवं मृत्युः सर्वस्वोत्सर्गकारिण्या मे ईदृशी भवति चेत् परिणतिः, किं तज् जगतो हिताय भविष्यति? स्वर्गोन्नतप्रेम्णः पातालपातिनी परिणतिर्जगति प्रेमविभीषिकायाः कारणं भविष्यति।

ललिता। चिरक्षेमंकरि! माऽशुभं गणय। सर्वदुःखसहनतत्-परायास्ते क्लेशभोगेन सर्वस्य विश्वस्य दुःखदावानल-प्रशमनं संवृत्तम्।

श्रीराधा। सखि! इतः पश्य।

शुभ्रज्योतिर्धारया मिश्रितं सत्
कृष्णं तेजो धावते तत्र तत्र।

कृष्णः पार्श्वादग्रतश्चापि कृष्णः
कृष्णोऽधस्तादूर्ध्वभागेऽपि कृष्णः ॥

विभा क्षणाद् दीप्ततरा बहुलीभवति प्रेमहरिहुङ्कृतिः ।
कुशलो मारणबाणे भावः स्फुरति महासादनः परम् ॥
किन्तु तथापि तथापि कथं नासौ मम हस्तधृग् विभाति ।

ललिता । यदि स तादृशं न राजते तदा दौर्भाग्यं तस्यैव, न श्रीराधायाः ।

श्रीराधा । किन्तु तस्य दुःखमेव मम सुदुःसहम् । कथं मम प्राणनाथस्तत् सहेत । नहि नहि ललिते ! न स मे सुदीर्घं कष्टकृद् भवितुमर्हति । शृणु शृणु मम प्राणसखस्य मुरलीध्वनिम् ।

( गानम् )

सर्वगोपयोषितः सर्वदा मानपरिखता
निर्भरमालिङ्गन्ति यामुनतमालम् ।
श्रीकृष्णवंशीध्वनि-प्रोद्वेलित-मनोभूमि-
रोपितबीजाङ्कुरप्रसृति-विशालम ॥
गोकुलनगरपुण्य-सुप्तिभुक्ति-त्याग-धन्य-
प्रेमाकुल-बालाकुल-भ्रमितालबालम् ।
इत-स्ततः-सृति-भीति-प्रसारित-दृष्टि-यूथी-
विचुम्बित-सुरभित-यशोदा-गोपालम
गोपबाला विचुम्बन्ति यामुनतमालम्

विशाखा [ स्वगतम ] अहो उन्निद्रायाः प्रेमवाष्पाकुलितनयनायाः कृष्णप्रियाया आकुलताविजृम्भितजाग्रतस्वप्नः । [ अयि कृष्णमयि ! कुत्रात्र श्रीकृष्णः ?

ललिता । प्रीतिफुल्लशाखे ध्रुवे विशाखे ! कथं चिरायते राधाहृदयचिरामोदिनी तडिद्गामिनी मानधनिनी वृन्दा ? अपि किमपि कष्टं तस्या आपतितम ?

[ क्रमशः ]

वृन्दा। सखि ललिते! वृन्दाया यत् कष्टं तवापि तत् समम्।
(जनान्तिकं) श्रीकृष्णश्चन्द्रावलीकुञ्जं गत इत्यत्र कः सन्देहः?

ललिता। तत् कथम्।

वृन्दा। तस्य गमनस्य संभाव्यमाने सर्वस्मिन्नेव स्थाने मया गतं किन्तु नासौ कापटिकः क्वापि दृष्टः।

किन्तु श्रीमतीं किं ब्रवीमि? (राधिकामुद्दिश्य) सखि! कुत्रापि ते प्रिय आस्ते प्रच्छन्नः, नाहं समर्था तस्याविष्करणे। सखिस्थलीं प्रति स गतवान् इति श्रूयते। यथा तथा भवतु—सुखं स वसतु। पुनरागते तु तस्मिन् त्वया अवश्यमेव कठोरया भाव्यम्।

श्रीराधा। वृन्दे! सर्वमेव दुःखं मयाऽस्य कृते सोढम्। किन्तु—

तोयाञ्जलिं यदसृजं सतिलं सदर्भं
पत्युः पितुश्च विमलाय कुलद्वयाय।
यच्चात्यजं कुलवधूसमयं विशुद्धं
हन्तालि पश्य फलमस्य किमद्य जातम्॥

जटिलाकुटिलाभर्त्सनसहना
लाञ्छितहृदये सञ्चितदहना।
पथि पथि, वाटे, ह्यसतीगणना
संशयसङ्कुलजीवनमरणा॥

ललिता। अद्य पुनरागतं श्रीकृष्णं विशेषेण तिरस्कुरु मा खलु चटुलमिष्टमधुरचाटुवादैस्तस्मिन् स्नेहं प्रदर्शय। कठोरं मानमवलम्बस्व। मा भैषीः।

श्रीराधा। अहो शोषितसुखनिदानाऽस्मि। (इति रोदिति)

विशाखा। क्रन्दनेन किम् ? अस्मासु जीवन्तीषु किं ते भीतिकारणम् ?

श्रीराधा। विशुष्के प्रेमतरौ यूयं किं करिष्यथ ?

ललिता। निरन्तरवृष्टिधारया आलवालप्रणाल्या वा वयं प्रेमतरुं पुनः प्राणवन्तं करिष्यामः। गोपबाला वयं प्रेमविषयकं सर्वं विशेषेण जानीमहे।

श्रीराधा। गोकुलभाण्डीर-वृन्दावनधीर-हृद्विदार-मुरारिः।
सुनीलनीरद-यामिनीसुखद-तमालवनविहारी॥
नित्यनामरत-शुकपण्डितवृत्त-शिरःपिकपिच्छधारी।
लसितकुन्तल-तारकायुगल-तामसयमुनावारिः॥

सखि, नाहमतः परम् किमपि कृष्णं वस्तु द्रष्टुकामाऽस्मि। सर्वं कृष्णमतिदूषितं, चित्तं मलिनीकरोति च। तस्मात् मम कुञ्जात् सर्वाणि कृष्णानि वस्तूनि दूरीकुरु। सखि वृन्दे! सत्वरं दूरीकुरु। मा विलम्बनं कुरु।

वृन्दा। प्राणसखि! त्वमित्थं वदसि सत्यम्। किन्तु कृष्णमनोहारि भ्रमरकृष्णतारकयुगलं सूर्याचन्द्रमसाविव शाश्वतविश्वदीपरूपम्। एतस्य किं भविता ?

श्रीराधा। (सक्षोभम्)

यद् यन्नीलं वर्तते चक्षुरग्रे
तत्तन्मत्तः सर्वमुत्सारयाद्य।
नीलं वासस्तारके वा ममाक्ष्णो-
र्दूरीकुर्यां निर्दयाहं स्वयञ्च॥

(तारके उत्पाटयितुं प्रवृत्ता)

ललिता। अखिलसौन्दर्यमहिममयि! मा मैवं कुरु-

किमयमभिनिवेशो व्यर्थ आश्रीयते हा
न हि खलु निखिलं ते कृष्णमुत्सारणीयम्।

कृतपरिकरमेनं स्वप्न आलिङ्गितुं त्वां
किमु भवसि समर्था कृष्णबन्धुं निरोद्धुम् ॥

श्रीराधा। विनिद्राया मम निकटे कथं स्वप्न आगमिष्यति? अहो सर्वथा त्वमपि अनुकूलसमयापेक्षिणी कृष्णपक्षीयाऽसि। तद् दूरमपेहि।

विशाखा। सखि राधे! तद् भवतु नाम। किन्तु किं स्यात् तव पदतलचुम्बिनो धरित्रीमार्जनस्य काननायमानस्य केशपाशस्य?

श्रीराधा। धिक् त्वां मन्दबुद्धे! अपि न जानासि, अहं केशपाशं कर्तयित्वा देशत्यागिनी भविष्यामि।

विशाखा। सखि। मैवं भण। त्यक्तवृन्दावनायां त्वयि किं न्वस्माकं भविष्यति? पुनः शृणु—

सरल-मसृण-कालो यस्तमालो द्रुमोऽयं
यदयमुदकगर्भो वारिदः स्निग्धकान्तिः।
द्वयमिदमपनेतुं किन्तु ते कौशलं स्याद्
यदसि निखिलमङ्गे! कृष्णमुद्धर्तुकामा ॥

श्रीराधा। तमालं सुधालेपनेन श्वेतीकुरु, कृष्णमेघविलास-स्पर्शनबाधनार्थं चन्द्रातपो निर्मेयः। यूयमचिरात् तत् कुरुत।

ललिता। किं वा भविष्यति कृष्णनामविलासिनः शुकपण्डितस्य।

श्रीराधा। तस्य मुक्तिरचिराद् विधेया।

विशाखा। सखि! धरित्रीसर्वपापहरणकारिणी सेयं कालिन्दी कृष्णा, अस्याः कृष्णप्रवाहः कथं प्रशमनीयः?

श्रीराधा। अयि रोहिणीवैरिणि! मा मम वैरिणी भव। यमुनायाः कृष्णप्रवाहमहं स्वचक्षुःश्वेतवारिनिरन्तरधारयाचिरेण श्वेती करोमि। (इति कुञ्जाभ्यन्तरं प्रविशति)

ललिता। किन्त्वितः पुनः शशी निशिथिनीं विज्ञापयति शेषादरसम्भाषणम्।

(धीरं प्रविशन्तं कृष्णमालोक्य)

यात्येकतोऽस्तमयमम्बरदीप इन्दु-
वृन्दावनेन्दुरयमन्यत एति धीरम् ।
ज्योतिर्द्वयस्य गमनागमनान्तराले
राधा सती कृशतनुर्ननु कौमुदीव ॥

श्रीकृष्ण: । ललिते ! अपि सर्वेषां कल्याणम् ? श्रीमती आस्ते कीदृशी ?

ललिता । श्री: काचन अद्याप्यवशिष्यते, किन्तु मतिश्चिरायावसिता ।

श्रीकृष्ण: । ललिते ! तत् किमर्थम् ?

ललिता । त्वदर्थम् ।

श्रीकृष्ण: । मया किं कृतम् ?

ललिता । अगस्त्येनेव गण्डूषेण भवता तस्या आनन्दसागरो निपीत: ।

श्रीकृष्ण: । भृशं कातरोऽस्मि । किन्तु केनोपायेन तस्या दु:खापनोदनं करिष्यामि ?

ललिता । सा जीविष्यति चदुपायश्चिन्तयिष्यते । नासाग्रे तस्या: श्वासवायुरास्ते न वा इति संशयेन सम्प्रति सखीभिरुद्वेगोऽनुभूयते ।

श्रीकृष्ण: । तां द्रष्टुमिच्छामि । रोगाक्रान्ता सा विशेषेण परिचरणीया ।

ललिता । अस्मिन् विषये केवलं सखी प्रमाणम् । क्षणमपेक्षस्व, त्वरितमेव प्रत्यावर्तिष्ये (इति अन्तर्गच्छति)

श्रीकृष्ण: । (स्वगतम्) जाने मानराहुग्रस्ता श्रीमती

रोगो ह्ययं मनसि रूढ़पदो न देहे
तस्मान्मयैव भिषजा चतुरं चिकित्स्य: ।
मा नाम मान-महती महतीं मदर्थे
बाधां मम प्रणयिनी समुपैतु राधा ॥

(ललिता विशाखया वृन्दया च सह पुन: प्रविशति)

श्रीकृष्ण: । (ललितामुद्दिश्य) त्वमेव मम प्रियाया: प्राणप्रियतरा सखी । त्वमसि आवयोर्जीवनयोरेकमेवालम्बनम् । त्वरितं

तथा विधेहि, यथा श्रीराधाऽचिरादेव निर्गलित-कोपा भविष्यति।

विशाखा। अहो! आशाकुहकी त्वां नितरां भ्रमयति।

गतः कालो भूयानलमसमये वालचरितै-
रियं प्रत्याशा ते न खलु फलिनी जातु भविता।
तव ध्यायं ध्यायं सजलजलद-श्यामलतनुं
कृशश्यामा सेयं गतघृणा! गता संशयदशाम्॥८०

ललिता। श्रूयतां तावदन्यदपि—

प्राणास्तस्या नियतमचिरान्निर्गमिष्यन्ति देहाज्-
जीवन्ती वा जलदमलिनं द्रक्ष्यति त्वां न जातु।
सा वस्तूनामसितमहसामक्षमा दर्शनस्य
प्रत्यादेशं व्यधित विधुरा स्वान्निकेनादमीषाम्॥८१

श्रीकृष्णः। तस्या आदेशमहं प्रार्थये। सखि न खलु न जानीषे यन्मम जीवनालोकोऽपि तस्याः प्राणवर्तिकया ज्वलतीति।

वृन्दा। अहो! मिष्टभाषिन कृष्णशशिन! सुष्ठु लपसि। किन्तु यामिनीभागे कुत्र अस्तमित आसीः, यतः सखिस्थलीम् आद्रियसे, ततस्तत्रैव तवावस्थानं युक्तम।

श्रीकृष्णः। किं भणसि सखीस्थलीमिति?

वृन्दा।

लज्जाहीन! करे कुरुष्व मुकुरं पश्याननं सुन्दरं
सिन्दूरस्य विभाति विन्दुरिह यद् यत कज्जलस्यापि ते।
यच्चाभूद् व्रण एष गण्डफलके शोणस्तदेतन्न किं
धाष्टर्य्ं तेऽपरया कयाऽपि विहितं ब्रूते निशासम्भवम्॥८२

श्रीकृष्णः। वृन्दे! त्वं दैवशक्तिवलादीदृशं कृतवती। मामपगतजीवनं मा कुरु। सर्वापराधानां क्षमां भिक्षारूपेण युष्माकं सखीसकाशे प्रार्थये।

वृन्दा। (स्वगतम्) अहो श्रीकृष्णस्य दैन्यम, अतः परमपि नासौ क्लेशेन योजनीयः।)

(श्रीकृष्णमुद्दिश्य)

अपि क्षमाभिक्षणप्रकारोऽपि शिक्षणीयः ?

(श्रीकृष्णो नतजानुरुपविशति)

वृन्दा। तव मुरली अस्माकं भयकारणम्। तां मम हस्ते न्यासीकुरु (श्रीकृष्णो मुरलीं ददाति)

वृन्दा। (श्रीराधिकामुद्दिश्य) सखि! इत एहि।

(राधा प्रविशति)

कृतानुतापः सखि तेऽपराधी
द्वारे क्षमां भिक्षितुमस्ति लग्नः।
किं मुच्यतामेष नु दण्ड्यतां वा
वृन्दावनेशी त्वमसि प्रमाणम्॥

श्रीराधा। मुच्यते चेत् पुनरीदृशोऽपराधो न भविष्यतीत्यत्र को निश्चयः ?

श्रीकृष्णः। तदर्थं सर्वसखीसमक्षं स्वनाम-मुद्राङ्कितं प्रतिज्ञापत्रं दास्यामि।

प्रतिज्ञापत्रं प्राणपवित्रं स्वाक्षरीक्रियतेऽद्य मया। २६
जन्मजन्मान्तर-शक्तिदानपर-राधा मम प्राणप्रिया॥३१
मम हि मुरली राधारागवल्लीप्रचारव्याकुलधिया। २६
ध्वनति धृतकामा श्रीकृष्णमहिमा विलसति राधिका-श्रिया॥२७
सातीतानागत-जन्म शतशत-श्रीकृष्ण-पुण्यनिलया। २६
गृह्णात्वकृत्रिमां प्राणपणसेवां ललितादिचिराश्रया॥३०
अधमणाधम-श्रीकृष्णस्य मम सर्वदुःखैकविलया। ३०
वृकभानुसुता विश्वचिरवन्दिता नाशयतु दुःखं प्रिया। ३०

(श्रीराधिका मुरहरप्रिया॥)

ललिता। (स्वगतम्) अहो आनन्दोऽस्माकम्—अतः परं श्रीमती त्यक्तकोपा सानन्दं विहरिष्यति।

श्रीकृष्णः ! ( राधिकामुद्दिश्य ) देवि ! क्षमार्होऽयमिदानीं जनः। न त्वं मम केवलमेतज्जन्मलीलासहचरी, सर्वलीलावतारसहचर्यसि। राधे ! तव देहस्य दशस्ववयवेषु राजन्ते दशावताररूपरेखाः। तथा हि

नेत्रे मीनरुचिः स कूर्म उरसि क्रोडे स्फुरद्भूतला
मध्यं ते नरकेसरिप्रतिभटं गुल्फस्तु ते वामनः।
रामाणां शिरसि स्थिताऽसि सततं कायस्तव श्रीघनः
शुद्धायास्तव सर्वतो विजयते माने परं कल्किता ॥

राधा। [ सस्मितम् ] यथा ते प्रतिभाति।

( निष्क्रान्ताः सर्वे )

तृतीयोऽङ्कः

( द्वितीयदृश्यम् )

हिन्दोल-यात्रा

( श्रावणी पूर्णिमा तिथिः )

( ततः प्रविशति सखीपरिवृता श्रीराधा, श्रीकृष्णश्च दूरतः प्रविशति )

ललिता। ( राधामुद्दिश्य ) सखि ! दिग्दिगन्तविसारि सौन्दर्यं श्रावणपूर्णिमायाः पश्य। वृन्दावनचन्द्रश्च उद्वेलितहृदयसमुद्र इत एवागच्छति। प्रशस्तदिवसोऽयं हिन्दोलान्दोलनस्य। तत् सखि ! कुरु श्रीकृष्णस्य हृदयं मोदसारम्।

सखि राधे, पश्य ते नन्दनन्दनम्।
कुञ्जोपान्ते राधाकान्तो दिग्दिगन्तोद्भ्रान्त
इतस्ततो लोकयति करुणां करुणाम् ॥
वाञ्छामोऽद्य प्रियाकान्तयुगलमिलनम् ॥

प्राणनाथ-कर्णाहितं मणिकिंकिणी-शिञ्जितं
कलहंसचलनं चक्षुरञ्जनम् ।
दामिनीलसितकान्तिः शशिकोटिदीप्ति भ्रान्ति-
र्जनयतु च नाथे सुखमतुलनम् ।।
हिञ्जलक-कज्जलदले जलविन्दुलोललोले
चिरमिव कौमुदी हसति निपुणाम् ।
मधुमल्लिका मालती-करवीर-जाति-यूथी-
राजित-कुञ्ज-कान्त-चिररञ्जनाम् ।।
सखि राधे कुरु लघु लघु हसनम् ।।
यमुनातीर-निकुञ्जे पाटलीवाणीरपुञ्जे
रञ्ज राधे प्राणराधे श्रीकृष्णजीवनम् ।।

राधा । सखि ललिते ! सत्यमेवाद्य मधुधारां वमतीव भगवांश्चन्द्रमाः । अन्तरा दामिनीविलासे हृदयं प्रोल्लासितं करोति वियत सखी ।

विशाखा । सखि राधिके !

कालः शुभः सन्निहितः प्रियश्च सखीजनश्चापि समीपवर्ती ।
उत्सृज्य लज्जामनुगृह्य सज्जां विन्दस्व हिन्दोलममन्दहर्षम् ।।

ललिता । विशाखे ! कर्मेदम् उभयापेक्षि, तत्र कृष्णस्य मतमपि ज्ञेयम् ।

विशाखा । ललिते ! सर्वदा गोपीजनचित्ततोषणो राधानाथः ( श्रीकृष्णं त्वरितमुपगम्य ) अयि नवनीतचौर गोपीजीवनापहारक ! इतस्ततो विलोकनेन किम् ? पश्य अग्रतः केयं वर्त्तते ?

श्रीकृष्णः । ( राधिकामालोक्य ) अहो ! आनन्दः सुतराम् आनन्दः ।

ललिता । न केवलेनानन्देन परितृप्ता वयम् । परन्तु आनन्दं कोटिगुणितम् अद्य वयं कामयामहे ।

श्रीकृष्णः । मनोऽभिरामा वामेक्षणा रामाः । तत्र क उपायः ? किं मया करणीयम् ?

# आनन्द-राधम्

ललिता। आनन्दं श्रीमत्या दक्षिणभागे आत्मानं हिन्दोलाया उपरि स्थापय।

श्रीकृष्णः। विश्वहिन्दोलां या निरन्तरमान्दोलयति, सैव प्रथममुपविशतु।

सखीगणः। भवत्वेवम्। (श्रीराधिकाम् उपवेश्य) इदानीं त्वमस्याः पार्श्वचरो भव। (श्रीकृष्णो राधापार्श्वे हिन्दोलाया-मुपविशति)

(सखीवृन्दं गायति)

दोलारूढौ राधाश्यामौ।

जलदे चपला-शोभा विश्वजनमनोलोभा
धृतशाश्वत-स्फुरण-महिमानौ।
मृदु वहति मलय-पवनः!
श्रावण-पूर्णिमाज्योति—रुल्लसत् कुमुदभातिर-
हसति रजनीभूषणः॥
परिगलित काञ्चनाञ्जन—कृतसंमिश्रणतनुधन-
मधुरिमा मोहनमोहनः।
नीलाम्बर-पीताम्बर—विमिश्रण-रस-सञ्चार-
गरिमोल्लसति प्रेमघनः॥
हिन्दोला-दोलनरतौ राधाश्यामौ॥
हंस-मयूर-सारसाः प्रमत्त-मण्डूक-भाषा
मादयन्ति रसमत्तौ राधाश्यामौ।

मुकुटमणि-चुम्बन-हेमपृष्ठ-हिन्दोलन-
रतवेणी-दर्शनोत्कौ पूर्णकामौ
हिन्दोलान्दोलनरतौ
राधाश्यामौ ॥

( ततः प्रविशन्ति अन्यतः श्रीदाम-सुदाम-सुवलाः )

श्रीदामा । किञ्च, सुवल !

वर्षर्तुरेष कुसुमाकरतोऽपि रम्यो
रम्यश्च शारदऋतोरिति भाति मह्यम् ।
अश्रान्त-वर्षजलधौततलाचलाद्य
स्नाता वधूरिव मनो मदयत्यभीक्ष्णम् ॥
प्रणयियुगलमास्तामेकदोलाधिरूढं
सुवल वलवती नः शाश्वतो येयमाशा ।
शुभनभसि निशायां पौर्णमास्यां चिरात् सा
भवति फलवतीति प्रीतिधारां वहामः ॥

सुवलः । सुदामन् भ्रातः ! पश्य पश्य—

दोलायते प्रेमदोले किशोरयुगलम् ।
प्रफुल्लं भक्त-हृदयं पूर्णिमाप्रोज्ज्वलम् ॥१
परःशत-पुष्पमाल्य-मण्डिता हिन्दोला ।
विकचकुसुमकोमला राधिका समाकुला ॥२

सुदामा । शृणु, श्रीराधा अधीरं नो बन्धुवरं ब्रूते—

"अहो सावधानो भव कठिनं भूतलम् ।
हृदयं वेपते नाथ कातरं विह्वलम् ॥"

सुवलः । राधावचःसुधाविप्लावितहृदयाः सर्वे—

सर्वे शुक-पिक-सारी-हारीत-कोकिलाः ।
राधाकृष्णध्वनि-रता आनन्द विह्वलाः ॥

पश्य पश्य, अस्मान् दृष्टा तूष्णीं तिष्ठति प्रियबान्धवीसङ्घः

श्रीमत्याः। जनविहीनं स्थानमिदम्। तत् चतुरां ललितां पृच्छामि।

माधवी वान्धवीमुख्ये ललिते ललितस्मिते।
युगलमिलनेऽप्यद्य तूष्णीं सख्यः किमासते ?॥

ललिता। चौरमित्राणि पश्यन्तीनामस्माकमियमेव गतिः स्वाभाविकी।

सुवलः। चौरनायकं भवत्यो वहुमन्यन्ते न तु चौरान् ?

विशाखा। किमत्र चित्रम् ? पश्यतु भवान्—

मदयति ननु चेतोऽनन्यसाधारणं यत्
किमपि, न तु महत्त्वञ्चापि साधारणं यत्।
करिणमचलसारं तालतुङ्गं हि हित्वा
शिशुमपि पशुराजं किं जना नाद्रियन्ते ?॥

अर्थान्तरन्यास

किञ्च, महासमुद्र एवास्माकं रुचिर्न तु सिकतासु।

सुदामा। सिकतासु न भवतु, को दोषस्तीरशोभिकृष्णचूड़द्रुमदलस्य।

ललिता। कृष्णचूड़ानां न दोषः, किन्तु एरण्डानां दोषः ये द्रुमायितुं वृथा वाञ्छन्ति।

श्रीदाम। एरण्डे वल्लरी न वल्लभायते—नास्ति हीदृशः कविसमयः।

( सर्वे हसन्ति )

श्रीकृष्णः। ( सुहृद उद्दिश्य )

मम प्राणप्रियाः सुहृदः ! मधुमयोऽयं समयः, तदेनमानन्द-सङ्गीतेन भूयोऽपि मधुमयं कुरुत।

सुवलः। सखे, एतदपि वक्तव्यम्।

( गायन्ति-श्रीदाम-सुदाम-सुवलाः )

विनोदमल्लिका-विनोदमालिका
विनोदविहारि-गले।
राधा विनोदिनी विनुदतु प्रिया
अतुलान्दोलन-दोले॥
नदतु पाखोयाजो भिम्भिम्भिनाम्।

झनन झनन ननगागरणा झनगनर
ताागर धिना गरधि दिसि दिसि दिनाम ।
चन्द्रमणौ चन्द्रहारो दोदुल्यते शोभासारो
हिन्दोला हिल्लोलदोला करोतु मङ्गलम् ।
धिकि कटधिया ताथैया मृदङ्ग-वादनाश्रिया
तिनिना तिनिना दत्तां विश्वपुण्यफलम् ।
सर्वत्राद्य राजतां धरणी राधाकृष्ण-ॐ ॥

श्रीराधा । मम प्राणसख्यः ! प्रतिसङ्गीतेन सर्वान् विनोदयत ।

ललितादयः । वाढ़म् ।

( सर्वा गायन्ति )

मूलधार !

तव लीला महिमापारः ।
नवद्वाररोधकान्त सुस्नानयात्रा-शान्त-
पुण्यदेहरथारूढ़ोऽसि प्रेमसार ॥
आपाढ़कृष्णाद्वितोयारथविहार
भद्राराम सुखचर विश्व प्रेमाधार ॥
आषाढ़स्य घोरघनं घनघनगर्जनं
दामिनी-विलासि-वारिधाराः
साधनाश्री प्रेमरस-सुधीर-भावप्रकाश-
मधुर-पूर्णिमाशोभासार ॥
भक्तजनहृदाकाश-ज्ञानचन्द्र पूर्णहास-
प्रफुल्लित-गन्धपुष्पवासः ।
गोपसुतश्चित्तचोरः श्यामलगोपकिशोरः
नृत्यति गायति वधटीविलासः ॥

भुवनव्यापि-हिन्दोला राधाकृष्णप्रेमदोला
एकाकारमाल्यमुक्ताहारा ॥
प्रियाशताभरण-श्यामगात्र-विघूर्णन-
मधुमिलनव्यग्र-झनझनतकारा ॥
सुखं विहर राधे कृष्णप्रेमसारा ॥

श्रीकृष्णः । अहो हर्षः !

गीतं श्रोत्रमनःप्रसादनविधौ सम्यक् समालम्बनं
श्रोतृणां त्वरणामप्यदो विनयते संसारदावक्षतम् ।
आरम्भे समभात् सजीवमिव यद् विश्वं समाप्तौ तु तत् ।
सुप्तं किं किमु लीनमन्धतमसे किं मग्नमम्भोनिधौ ॥

किञ्च—

स्त्रीणां विधत्ते कलकाकलीध्वनिर्नृणां प्रमोदं ध्रुवमेव सर्वदा ।
तथापि वर्षर्तुभवो विकस्वराः पिकस्वरान्नातिलघुः शिखिस्वरः ॥

राधिका । नाथ ! पारावारोत्तरलीकरणे प्रभुः कतमश्चन्द्रः, आकाशस्थो वा मत्पार्श्वस्य प्रभोः कृष्णचन्द्रस्य वदनचन्द्रो वा ?

श्रीकृष्णः । मया तु ज्ञायते श्रीराधिकाया वदनचन्द्र एवात्र निपुणः । सर्वे गोपा गोप्यश्च ।—तत् कतमत् सत्यम् ॥

( गायन्ति )

( सङ्गीतम् )

अहो पूर्णचन्द्र-त्रय-युगपत्प्रकाशः ।
नीलनभः क्रोड़ाश्रय-हिन्दोलाङ्कशोभिद्वय-
त्रितय-मिलित-स्मित-विपुलविलासः ॥
भावकम्रकुमुदिनी-दिवाभ्रान्त-कमलिनी
बन्धुजीव-सूर्यमुखी-हितमितहासः ।
हारीत-सारस-पिक-पारावत-चक्रवाक-
भागवतप्रेमवश-मधुर-संभाषः ॥

कालशुभशृङ्गध्वनिर्विश्वमातृमोदखनि-
कृष्णजन्माष्टमीगाथा-मिलनसरसः।
कोटितारका-विलोक-पुलक ज्ञात-भूलोक-
विकचकुसुमकोटि-मोहन सुहासः॥
महाभाव-प्रेमघन-वृन्दावन-प्राणधन-
हिन्दोलदोलनसुख-चरमविकाशः।
भारतवासि-हृद्देश-तमोराशि-चिरनाश-
प्रियङ्कर-कृपापर-सुविमलभासः॥

श्रीराधिका। नाथ! कुरु परमकल्याणं विश्ववासिनः। भक्तिप्रधानं भारतवर्षं विश्वस्य शान्तिनिदानं भवतु।

( समाप्तं चतुर्थ-दृश्यम् )

## पञ्चमं दृश्यम्

## रासलीला

[ सुवलः सुदामा च प्रविशतः ]

सुवलः। भ्रातः सुदामन्! गोकुलं परितो भ्रमामि श्रीकृष्णानुसन्धान-तत्परः, किन्तु नासौ दृष्टेर्गोचरीभूतो जातः। कार्यस्य फलोदयाभावाज्जायते क्लान्तिर्महती।

सुदामा। कथं क्लान्तिः? कुन्दकर्पूरधवला कार्त्तिक-पूर्णिमारात्रिः। निखिलवर्षस्य श्रेष्ठा यामिनी इयं रासनामाङ्किता।

सुवलः। भ्रातः, सुष्ठु उक्तम्। तथाहि—

रासलीलायामिनी राधाकृष्ण-प्रार्थिनी शोभते
प्रतिकुञ्जं फुल्लप्रसूनैः।
विचित्रवर्णप्रोज्ज्वल-ललितललाल्लीलालोल-
सौन्दर्यमाधुर्यानन्दरसघनैः।
किमु विकच-कुसुमकुलाकं
न हि, कृष्ण-शिखिपुच्छकं
चित्रमिन्द्रधनुश्चलं नयनोल्लासम्।

मधु-सौरभं प्रतिदिशं
सूचयति सुप्रकाशं
पद्मगन्धि-श्रीराधिकाङ्ग-सुवासम् ॥

सुवलः । सुदामन् ! कवित्वं दूरेऽपहाय मद्वचः शृणु । श्रीकृष्णं रासलीला-विहारार्थं प्रबोधयितुमादिष्टोऽस्मि सुललितया ललितया । तस्मात् प्राणपणप्रयत्नो मे श्रीकृष्णानुसन्धानाय । असौ रसिक-चूडामणिर्नटवरो गोपवधूहृदयचोरः साम्प्रतं कुत्रास्ते ?

सुदामा । श्रीकृष्णार्थं का भावना ?

रासरात्रिर्महापुण्या धन्या क्षौणीमहाहिता ।
यस्यां तूर्णत्वमायाति प्रकृते रसरूपता ।
जयतु शान्ति-सौन्दर्य-क्षान्त-सौकर्य संयुता
धरणी-धारणाध्यान-राधाकृष्णाश्रिता कथा ॥

अहो श्रीदामाऽपि इत एवायाति ।

सुवलः । मयाद्य सर्वत्र सर्वमेव राधाकृष्णमयं दृश्यते ।

[ ततः प्रविशति श्रीदामा ]

(श्रीदामानमुद्दिश्य) भो निशादिवासम-सुखचर ! कुत्र गच्छसि ?

श्रीदामा । सुदामन् ! अस्यां रासयामिन्यां किं पार्थक्यं रजनि-दिवसयोः । पश्य इयं यामिनी सत्यं दिवसायते—

ध्वान्तं क्वापि विलीनमद्य सहसा बाह्यं तथाभ्यन्तरं
सञ्चारः पशुपक्षिणामनुदिशं संलोक्यतेऽवारितः ।
वस्तूनामपि नास्ति दर्शनविधौ बाधा वितारं वियद्
आकुञ्चन्नलिनीमुखैः कुमुदिनीहासैर्निशा मीयते ॥

परितः शोभन्ते क्षीरनिकाशाः काशाः सप्तपर्णकुसुमानि च दधिसारवर्णभाञ्जि । फलभारेण नमिता अमिताः शालि-मञ्जर्यः केदारान् परितो दृश्यन्ते । परुषीकृत-मयूरस्वरा मांसल—कोमलस्वना हंसाः शरतकान्ताः कान्तायन्ते ।

अहो नु हर्षः, श्रीकृष्णस्य वंशीध्वनिरदूरे श्रूयते ।

सुवलः। अहो प्रियं मे। प्रियो मे प्रियासमागमाय नियन्त्रित इव इत एवागच्छति।

श्रीदामा। अहो मोहनो मुरलीध्वनिः।

काठिन्यं गतमस्ति यामुनजलं स्थैर्यं गता जङ्गमा
ग्रावाणो द्रवतां चरत्वमचरा अङ्गेषु कम्पोद्भवात्।
किञ्चाश्चन्ति तरुच्छदा अपि मुदा सद्यः परावर्तनम्
एवं भावविपर्ययं प्रकुरुते कृष्णस्य वंशीध्वनिः॥

सुवलः। इतश्च पश्य,

पयोधरं गतिविधुरं दिवि व्यधाद्
रसातले चलमतनोदहीश्वरम्।
वधूकुलं विचलयतीह गोकुले
करोति किं किमिह न वेणुरद्भुतम्॥

सुदामा। परामृतस्वादसहोदरान् स्वरान्
आपीय वेणोः सुखपीन-धेनवः।
क्षरत्स्तनक्षीरखरोष्णधारया
सिञ्चन्ति वृन्दावनपुष्पवीरुधः॥

सर्वे वन्धवः। (श्रीकृष्णं दूरतो दृष्ट्वा) अदूरे दृश्यते श्रीराधिकाप्रियः श्रीकृष्णः।

(श्रीकृष्णः प्रविशति)

सुबलः। अहो आगमनसमकालमेव कृष्णेन कृतो मुरलीध्वनिः। निमेषादेवागमिष्यन्ति गोपनार्य इत्यनुमीयते। (दूराद् दृष्ट्वा) हन्त, अनुमानमिदानीं प्रत्यक्षतां गतम्। एताः अग्रेश आयान्ति गोप्यः! अहो भूषावैचित्र्यमङ्गनानाम्?

एकं नेत्रमनञ्जनं वहुमसीलिप्तं द्वितीयं पुन-
र्दक्षो नूपुरमण्डितः सवलयः सव्यः करः शोभते।
कृत्वैवं त्वरया विचित्रविधया भूषां समेताः स्त्रियो
न त्वेकाप्यनलङ्कृता गुरुरहो योषासु भूषादरः॥

# आनन्द-राधम्

## तृतीयोऽङ्कः

### ( पञ्चम-दृश्यम् )

( ततः प्रविशन्ति विपर्यस्तवेशा राधामुख्या गोपनार्यः )

श्रीकृष्णः। स्वागतं भवतीभिः। अपि सर्वासां कुशलम्? किमिति यूयमेवं गभीरायां रजन्यामकारणौतकण्ठ्यम् अवलम्बमाना अत्र समागताः? गृहकर्म उपेक्षमाणा नार्यो दोषभाजनमिति किं न विदितं युष्माकम्?

प्रथमा गोपी। त्वयि मे प्राणाः समर्पिताः; त्वां विहाय कथं जीवितं धारयिष्यामि?

अन्या गोपी। दिवसान्तेऽपि त्वां सकृत् दृष्ट्वा तव वदनामृतपानाय नित्यलोलुपा उन्मत्ता जीवामि। अयि राधाचन्द्रावलीचित्त-चोर! मम को दोषः?

श्रीकृष्णः। दोष इति? न केवलं तव, सर्वासामेव युष्माकं सुमहान् दोषः सञ्जातः। अतः

क्षणमपि न विलम्बः कार्य आर्याभिरस्मिन्
गहन-विपिनमध्ये, गम्यतां स्व-स्वगेहम्।
परिचरत परीता भक्तिभावेन सर्वान्
पति-सुत-जनकादीन् एष वो धर्ममार्गः॥

( सर्वा गोप्यः परमविषण्णा अधोमुख्यश्चरणेन भुवं लिखन्ति। ततश्च परस्परं मन्त्रणां कुर्वन्ति। )

राधा। ( प्रकाशम् ) नाथ! यदहम् इदानीं वदामि तत् सर्वासां गोपीनां मतम् इति जानीहि। किमिति भवान् एवम् अति-

निष्ठुरं वदति ? वयं सर्वं परित्यज्य भवत्सकाशमागताः; अस्मान् न परित्यज।

पत्यादिस्वजनान् विहाय गृहमप्येता वयं कान्त ते
पादान्ते समुपागता न तु पुनः कल्पामहे वेश्मने।
तत् त्वं दीनजनानुरञ्जक दयस्वास्मासु दीनात्मसु
त्वत्पादाम्बुजसेवया सफलतां प्राप्नोतु नो जीवनम्॥

अपि च

विश्वात्मा त्वमसीति यत् तव भिदा पत्यादिभिर्नेक्ष्यते
तेनाप्यस्ति भवान् वृतः पतिधिया गोपीभिराभिः सखे।
गोत्रीयस्तव कश्चिदास्त विदितः पत्नीं वने वासयन्
कृष्ण त्वं सहधर्मिणीः परिहरन् मा तत्समत्वं गमः॥

कृष्णः। (स्वगतम्) नातःपरमपि परीक्षा भद्रा गोपरमणयाः! कार्या। दृष्टमासां निष्कलुषं हृदयम। (प्रकाशम्)

युष्मन्मनो मयि समर्पितमित्यवेत्य
प्रीयेऽहमद्य भवतीषु दृढं रमण्यः।
एकात्मबुद्धिरुदिता मयि वो यदेषा
तेनाशु मोक्षपदवी च करस्थितैव॥

तत कामं मया सह विहरत। (सर्वाभिर्गोपीभिः सह विहरन् कृष्णो हठादन्तर्हितः। अन्तर्हिते कृष्णे गोप्यस्तं विचिन्वन्ति। काचित् एकाकिनीं दुःखजर्जरितां राधां दृष्ट्वा) अहो वृन्दावनेश्वरि! त्वमपि एकाकिनी अनाथा विपन्ना? तवापि इयमवस्था चेत किं पुनरस्माकम्? (सर्वाः सम्भूय कृष्णस्य गुणान् गायन्ति)

(श्रीकृष्णस्य गुणगानम्)

श्रीकृष्ण त्वं जीवनम्।
तव श्रीचरणं ब्रह्मादिशरणं
मम जीवनधारणकारणम्॥

त्वत्-पद-पङ्कज धारणालुब्ध-वक्षोज-
स्फुरणं जनयति मरणायातनम् ।
सर्वदुःखभञ्जन गोपीजनप्राण-मान
हृत्पद्मवासि-नाथ ! विश चित्तवनम् ।
त्यज कण्टकवनम् एहि चेतोवनं
नाथ एहि चेतोवनम् ॥
मदनमनोहर पीताम्बरधर
यशोदासुतवर विश चेतोवनम् ॥

( धीरं प्रविशति श्रीकृष्णः । सर्वाः कृष्णं परिवार्य स्थिताः )

राधा । शठ, किमिति निरागसोऽस्मान् परित्यज्य एतावन्तं कालं निलीनोऽसि ?

कृष्णः । भवतीनां भावस्य दृढतां परीक्षितुमेवं छलमाश्रितवान् । किञ्च, विरहं विना सम्भोगो न पुष्टिमान् भवति । तन्मा खिद्यत, एत, वयं नृत्यादिकं कुर्मः ।

( श्यामेन सह नृत्यन्ति व्रजबालाः )

—०—

चतुर्थोऽङ्कः

प्रथम-दृश्यम्

गोकुलस्थ-नन्दराजगृहम् ।

जननी यशोदा पिता नन्दश्च प्रविशतः ।

यशोदा । नाथ ! अहो महद्वीर्यं पुत्रस्य मे । कृष्णमेवं पुत्ररूपेणासाद्य नारीजीवनं मे सार्थक्यमाप्तमिति ध्रुवम् । जन्मना एव नारी माता ; नार्याः स्वकं श्रेष्ठं रूपं मातृरूपम् ।

कृष्णं समासाद्य सुतं गुणोत्तरं
कृतार्थमेतन्मम मर्त्यजीवनम् ।

वाञ्छाम्यविच्छेदमनेन केवलं
पत्या त्वया चापि विधातृसन्निधौ ॥

धन्या सा नारी या एकतः पतिम् अन्यतः पुत्रं वीक्षमाणा आमरणं पतिचरणं निषेव्य पुत्रकल्याणं संसाध्य अन्तिमे प्राणनाथस्य पादयोरुपरि मस्तकं संस्थाप्य नयनयुगलं निमीलति ।

नन्दः । देवि ! चिरं सुखं जीव । कथमद्य अकारण-समङ्गलवाणीमुच्चारयसि ? किमिति च केवलं स्वमेव विषयं परिचिन्तयसि ? इतो मामपि पश्य,

प्रौढस्य पत्नीविरहस्तुषाग्निवद्
हृदि ज्वलन् देह-शमीद्रुमं दृढम् ।
दहत्यकाण्डे बहिरप्रकाशित-
स्तदेवमाजीवनमेष तास्यति ॥

यशोदा । नाथ ! क्षमस्व मां—यदि मम वचोदौर्बल्यात् किमपि दुःखं तव हृदये मया सृष्टं स्यात् । तथापि प्राणनाथ ! इयं मे केवलं प्रार्थना, जन्मजन्मान्तरीणा प्रार्थना—विरहदावदाहेन मा मां प्रदग्धां कुरु । सा खलु विषमभावना, या चिन्तनमात्रेण मां ज्ञानहीनामुन्मत्तां करोति ।

भो देवादिदेव जगन्नाथ ! अस्मत् सर्वसुकृतिविनिमयेन पतिं मम मत्तो दीर्घायुर्भाजं कुरु ।

नन्दः । ( विहस्य ) कथं स्मरसि देवदेवम् । जगत सर्वमद्यत्वे तव पुत्रमेव ईदृशीष्ववस्थासु स्मरति ।

यशोमती । नाथ ! "आत्मा वै जायते पुत्रः" इति शास्त्रवाक्यम् । त्वमेव पुनर्मम पुत्ररूपेण जात इति शास्त्रवाक्यफलोदये का क्षतिः यदि अहं मम नाथप्रतिकृतिं भगवन्तं रक्षायै स्मरामि ।

नन्दः । देवि ! तव तुलना त्वमेव, यथा गङ्गायास्तुलनमेका गङ्गैव ।

पुनः गङ्गाजलेन गङ्गापूजा विधीयते। तस्मात् तव वचसा त्वां प्रीणयामि।

यस्तावत् स्तनपान-केलिकलया वीरोऽवधीत पूतनां
त्रैमास्यः शकटं रुदन् समभनक् तिष्ठन्नधो लीलया।
एकाब्दो यमलार्जुनावथ तृणावर्तश्च योऽपातयद्
अन्यानप्यसुरान् ध्रुवं स भगवान् नास्त्यत्र मे संशयः॥

यशोदा। नाथ! देव! मम पुत्रो भगवान् इति महत् मम आनन्द साम्राज्यम्। किन्तु कठोरा खलु नियति र्यन् मथुराराजः कंसः सर्वदा मम पुत्रस्यानिष्टमिच्छन् पुनः पुनः प्रेरयति असुरान्। तथाच मारितः कृष्णेन अरिष्टासुरो वृषभ-रूपधारी, अश्वमूर्तिधरः केशी, मयदानवपुत्रो महामायः पशुपालरूपी व्योमासुरश्च। नाथ! कदा नु अस्य दौरात्म्यस्य भविष्यति परिसमाप्तिः?

नन्दराजः। देवि! काऽसीत् शान्तिः सुखं वा त्रेतायुगे नरकायधारिणो रामभद्रस्य जनन्याः कौशल्यायाः? यदा दुर्वहो भवति फणिना शेषेण धरणीभारस्तदा तस्य लाघवार्थं भागवतोऽ-वतार-प्रसङ्गः। तत्र प्रथमोपायः—अनारतं-मातृ-प्रिया-चक्षुर्धारा-मोक्षणेन धरणीप्लावनम।

यशोदा। नाथ! दुःसहोऽयं वचोविन्यासः। तत् किमा जीवनं समर-व्याकुलो जीवनमतिवाहयिष्यति मम प्राणप्रियतमः पुत्रः कृष्णः? तथा सति—अपि स व्रजनगरे स्थास्यति? मम चक्षुषोरन्तरितः स कदापि न भविष्यति?

नन्दः। देवि! सर्वावस्थासु वीरपुत्रस्य, विशेषतो, भगवदाख्या-भूषितस्य पुत्रस्य जननी पुत्रस्य हितचिन्तनतत्परा धीरा स्थिरा सर्वंसहेव राजेत।

यशोदा। किन्तु अपि स व्रजधाम परित्यज्य स्थानान्तरं गमिष्यति?

नन्दराजः। देवि! स्वप्नदर्शनस्य फलं कीदृशं भविता तत् भाग्याधीनमेव।

यशोदा। स्वप्नदर्शनमिति किमुच्यते ? किं संघटितं तदकपटं मां ब्रूहि।

नन्दराजः। चिरकल्याणि ! नन्दजीविते ! शृणु। विगत-रजन्यां स्वप्नदृष्टो महर्षिर्नारदो मामुक्तवान्—"नन्द !

राज्यं धर्मोत्तरमिह भुवि स्थापयिष्यन् सुतस्ते
जातः कृष्णो निखिलधरणी-भारनिर्हारहेतोः।
पूर्वं केशिप्रमुखदनुजानेष दुष्टान् जघान
हन्ता पश्चादपि कुवलयापीड-चानूरकंसान् ॥"

यशोदा। देव ! एष नवनीतकोमलो मे पुत्रकः कथमेतानि दुःसाध्य-कर्माणि संसाधयिष्यति ? ततः, ततः ?

नन्दः। तदनन्तरं युधिष्ठिरानुष्ठित-राजसूय-यज्ञभूमौ कृष्णेन कृतं दन्त-वक्र-शिशुपालवधादि कुरुक्षेत्र-युद्धक्षेत्रेऽर्जुनसारथ्यादिकञ्च—नारदो विवृतवान्।

यशोदा। देव ! अपि एष देवनिर्देशः ?

नन्दः। प्राणप्रिये ! स्वप्नदृष्ट एष वृत्तान्तः। तथापि कार्यकारण-परम्परया सर्वमेवावश्यं भावि सत्यमिति मम प्रतिभाति। कायस्य यथा छाया, स्वप्नोऽपि तथा सत्यस्य अस्थायि प्रति-बिम्बनमिति।

यशोदा। यदि श्रीकृष्णो वृन्दावनं परित्यजति, किं नु भविष्यति मम दुहितू राधिकायाः ? कृष्णाद् दूरं गता सा मुहूर्तमपि न जीवितं धारयिष्यति। अहो ! बहोः कालादनन्तरं पुत्रमुखं दृष्टं—तदपि विधातुर्जातमसहनीयम।

नन्दः। देवि ! एष स्वप्नवृत्तान्तो यथा न राधिकया परिज्ञातो भवति, तद्विषये सावधानया भवितव्यम्।

यशोदा। दयित गोकुलाधीश व्रजेश्वर ! करुणाम् अति करुणं प्रार्थयेत त्वरितं तथा विधेहि, यदि राधाया मम च जीवनं तव ऽयं—द्रुतं तथा कुरु यथा मम अञ्चलनिधिः कृष्णो गोकुलाद् बहिः, वृन्दावनं परित्यज्य पादमेकमपि न प्रसरति। नाथ !

पुत्रस्य मम पादध्वनिरिव श्रूयते। अहो इतोऽधिकं प्रियं न मे किमपि। (स्वगतम्)

गोपालपादध्वनिरेष कोमलो
न लक्ष्यतेऽन्येन समीपतोऽपि यः।
मया पुनर्दूरत एव स श्रुतो
ध्वन्यन्तरान्तःपतितोऽपि बुध्यते॥

(श्रीकृष्णः प्रविशति)

श्रीकृष्णः। (आदौ भूयो भूयो मातरं ततश्च सकृत पितरं प्रणमति) जननि! कथं जलपूरार्द्रनयना तिष्ठसि? परमसुख-स्थाने गोकुले अपि अत्याहितं किमपि संघटितम्?

आस्यं किं ते मलिन-मलिनं किन्तु नेत्रे च सिक्ते
का ते बाधा हृदि समुदिता ब्रूहि मामाशु मातः।
दौर्जन्यं मे किमु कपटिना बोधिताऽस्यग्रजेन?
पित्रा साकं कृतकलहया किं त्वया रुद्यते वा?॥

यशोदा। तात! त्वदर्थं क्रन्दामि। तवादर्शन-पीडिताया जनन्याश्चक्षु-र्वारि न ते दुःखकारणं तव भवतु। वत्स! ईदृशमेव मातृ-हृदयं परमकोमलं यत् पुत्रविषयकमनागतं भयमव-लम्ब्य वेपते खलु।

श्रीकृष्णः। मातृवत्सः शोभी नितरामस्मि, भविष्यामि च।

नन्दः। पुत्र! मातृवत्सासि पुत्रशोभातः पितुरानन्दकारणं नान्यत किमपि भवितुमर्हति!

श्रीकृष्णः। सा एव शोभा जगनसंरक्षणकारिणी। माहात्म्यम् अहो मातृहृदयस्य। नवनीतचोरस्य मे नवनीताभ्यधिककोमल-हृदयाया मातुर्हृदयनवनीतमेव प्रकृष्टतमं ध्रुवमेव।

यशोदा। पुत्र! राधायाश्चक्षुर्वारि मम सर्वथाऽसह्यम। तद् भगवत-सकाशे कातरा इयं प्रार्थना—वृन्दावनं मम पुत्रः सर्वदाऽधितिष्ठतु इति॥

नन्दः। मातुराशीर्वादात् किं न भवितुमर्हति।

कृष्णः। कृष्णस्य माता विश्वमाता। विश्वस्य मङ्गलमेव तस्या एकान्त-काम्यम्, एकान्तध्येयम्। ततः तदेव कृष्णेन चिरं ध्यायते। पितरौ! प्रणामान् मे गृह्णीतम्। सर्वेषां कल्याणं प्रार्थये॥

## चतुर्थोऽङ्कः

### द्वितीय-दृश्यम्

### नारद-कंस-चानूर-संवादः

(प्रविशति चिन्तापरायणः कंसः)

कंसः। हन्त भोः!

न दैववाणी भवति क्वचिन्मृषा कन्या च दृष्टाऽष्टमगर्भसंभवा।
श्रुता तदुक्तिर्निजमृत्यु-भीषणेत्युपैति पर्याकुलतां ममान्तरम्॥१॥

तत् किमिदानीं करिष्ये? यद्यपि देवकीकन्यावाक्य-प्रत्ययात् सर्वत्रानुष्ठीयते नृशंसा शिशुहिंसा, तथापि न मे चेतः परिशुध्यति। प्रत्युत, गोकुलेप्रेषितानां पूतनातृणावर्तादीनां निधनवार्ताश्रवणेन नितरामुद्विजतेऽपि।

अपि तत्रैव स्यान्मे चिरशत्रुर्देवक्या अष्टमगर्भसम्भूतः सन्तानः? अथवा अलमाकाशकुसुमकल्पनेन। (विचिन्त्य) भवतु, चानूरमाकारयामि। चानूर चानूर! (ततः प्रविशति ससंभ्रमं चानूरः।)

चानूरः। राजन्! किमर्थमाहूतोऽस्मि?

देवाः किं पुनरुत्थिताः किमुत वा सामन्तभूपाः परे
कच्चित्त्वां न विरुन्धते प्रकृतयो भक्त्योग्रसेनस्य वा।
देवक्यष्टमगर्भसम्भवगता वार्ताथ काचिच्छ्रुता?
विच्छायं वदनं मनश्च नितरां चिन्तापरं ते यतः॥२॥

## चतुर्थोऽङ्कः

### द्वितीय-दृश्यम्

कंसः । चानूर ! त्वद्द्वितीयोऽहं देवानपि न गणयामि, किं पुनः क्षुद्राः प्रजाः । त्वदुक्तो देवकीपुत्रविषयकोऽन्तिमपक्षः पुनर्मानसं मे किञ्चित् स्पृशत्येव । पश्य, किमिति गोकुले पूतनादयो हता इति चिरं चिन्तयन्नपि न निर्णेतुं प्रभवामि । अपि त्वयाऽस्य किञ्चित् कारणं निर्णेतुं शक्यते ?

चानूरः । देव ! अस्य कारणान्वेषणार्थं बहुदूरं न गन्तव्यम् । अवधारयतु तावद् देवः—

पूतना जरती रुग्ना नारी स्थूलकलेवरा ।
स्यान् मृता हृतक्रियारोधात्तत्र किं व्यर्थचिन्तया ॥

ये चान्ये वत्सवकादयस्तेऽपि मायाविनो मायामयं शरीरं परिगृह्येतस्ततो भ्रमन्ति । मायायाः पुनरयं दोषो यद् यदि सा यथाकालं प्रत्याहर्तुं न शक्यते, तर्हि स्वया मायया स्वयमेव म्रियत इति । तथाप्येतेषां वृत्तान्तानां याथार्थ्य-निर्णयार्थं पञ्चपजनानां कश्चिदायोगस्तत्र प्रेषितः । तदलमनेन तुच्छ-व्यापारेण मनः क्लेशयित्वा । अहो को न्वायाति ?

( ततः प्रविशति नारदो गायन् )

नारदः ।—

कृष्ण कृपामय नाशय भीतिं
पापान् गापय तव गुणगीतिम् ।
दुःखं नश्यतु जगतः सर्वं
खर्वीकुरु गुरुदुर्जनगर्वम् ॥१

भवदववह्नेरुद्धर दासं
कृन्त कृतान्तोद्भटतर-पाशम् ।
रक्ष धरित्रीमसुराक्रान्तां
दुर्जन-दुर्णय-सतताशान्ताम् ॥२

तोयधितीरे तिष्ठाम्येकः
क्षिपतु वराके मयि नयने कः ।
मम न कलत्रं न सुतो बन्धु-
स्त्वमिह शरण्यः करुणासिन्धुः ॥३

सर्वे सुखिनो भुवि राजन्तां
सन्तमसन्तो नहि वाधन्ताम् ।
काले वर्षतु जलदः पुण्यं
भारतवर्षं भवतु सुधन्यम् ॥४

( कंसादयः प्रणमन्ति )

नारदः। स्वस्त्यस्तु युष्मभ्यम्। वत्स कंस ! अपि कुशलं ते ?

कंसः। भगवन् ! कुतः कुशलमधन्यस्य मे। पश्यतु भवान्—

कन्या येयं भगिन्याः समजनि जठरात् सा शिलायां निधातु-
र्हस्तान्मे प्रस्खलन्ती गगनमुपगता मामभाषिष्ट रुष्टा ।
लाभः कस्ते हतायां मयि विषयमदक्षीव ! जीवान्तकृत्ते
जातः क्वापीति शृण्वंस्तदवधि दिवसान् यापये भीतभीतः ॥५

( अयि मदेकसदय-परमर्षे ! तदिदानीम्—

रोगोऽज्ञातो जरयति वपुः कम्पते काययष्टि-
र्मूर्च्छा भूयो भवति लभते नापि चेतः प्रशान्तिम् ।
विज्ञातश्चेदुपदिश मुने व्याधितस्यौषधं मे
येन स्वास्थ्यं पुनरपि भजेदेष ते दासदासः ॥६

नारदः। वत्स कंस ! भूतार्थं त्वां ब्रवीमि, शृणु—देवक्या अष्टम-
गर्भजाता कन्यका सत्यमासीद्यशोदाया नन्दपत्न्या दुहिता।

श्रीकृष्णां-वलरामौ देवक्यास्तनयौ। भयार्तौ वसुदेवः कृष्णां स्वमित्रस्य नन्दस्य धाम नीतवान्। महाराज! सहाग्रजः स एव सर्वेषामेतेषां तव बन्धूनामनुगतानां वा निधनकारणम्।

कंसः। किं, किं कथ्यते?

नारदः। महाराज! यद्यन्मयोक्तं, तत् सर्वमक्षरशः सत्यम्।

कंसः। अहो सत्यमेवाविसंवादिनी धीमतामन्तःकरणवृत्तिरिति।

यत् पूर्वं बहु शङ्कितं हृदि मया युक्त्याऽन्वितं गाढया
तज् ज्ञात्वाऽवितथं मुनेः करुणया क्लिश्यामि हृष्यामि च।
चानूरानय मे धनुः सहशरं त्वश्चानुगच्छाशु मां
तन्निर्नन्दमरामकृष्णमचिरात् कुर्यां हि वृन्दावनम्॥७

तदद्याहमचिरेण देवकीवसुदेवौ हनिष्यामि। रे मम प्राण-बन्धो खड्ग! विश्वासघातकस्य मूढ़स्य शिरोग्रहणविषये मा श्लथप्रयत्नो भव। हिंसा, प्रतिहिंसा, जिघांसा कृपा-परिपूर्णस्य कंसस्य हृदये बद्धमूला भवतु। पितरमुग्रसेनं भगिनीपतिश्चा-चिरान् निहनिष्यामि।

नारदः। महाराज कंस! भगिन्या भगिनीपतेश्च निधनं न पुण्यवति त्वय्युपपद्यते। तौ न हन्तव्यौ। किन्तु यन्मया उक्तं, तद्विषये सावधानो भव।

चानूरः। यथा ऋषिणोक्तम्, आवामवहितौ भविष्यावः।

नारदः। महाराज! त्वया सावधानेन भाव्यम। तयोरेव करे तव निधनमास्ते निर्धारितम्।

चानूरः। महाराज एव तयोर्निहन्ता।

नारदः। महाराज एव तच् चिन्तयिष्यति। मया गम्यते।

(नारदः प्रस्थितः)

कंसः। चानूर! श्रुतं त्वयाऽनेन ऋषिणा यदुक्तम्?

चानूरः। महाराज! मुष्टिकसमन्वितोऽहं यामि गोकुलं कृष्ण-राम-संहारसाधनाय।

कंसः। न युवाभ्याम् तत्र गन्तव्यम्। अत्र स्थित्वा युवां तयोः संहारं करिष्यथः। रङ्गद्वारे कुवलयापीडः करी स्थापनीयो यथा प्रवेशनमुखेऽसावेतौ मारयिष्यति। प्रारभ्यतां चतुर्दश्यां तिथौ धनुर्यज्ञः। वरदभूतनाथाय बाहुल्येन भवतु पशुहत्या। (विचिन्त्य) चानूर! ध्रुवकरणीयविषये विलम्बो न करणीयः। यदुकुलावतंसमक्रूरमाह्वय। त्वरितं गच्छ।
(चानूरो बहिर्गतः)

कंसः। अहो! कृष्णरामौ सर्वासुरहननस्य कारणम्। अद्य मे प्रतिभाति ऋषेर्नारदस्य वचनमवितथमिति। अथवा क्षणिकदौर्बल्यमेतत। रे दौर्बल्य! वीरशार्दूलस्य मम हृदयाच् चिराय दूरं गच्छ। स्वार्जितं पौरुषं स्वकं बलं वीर्यं च मम विजयकारणम्।

प्रेषिता बहवोऽसुराः। तदधुना संप्रेषयिष्यामि सर्वजनसुविदितं परमधर्मपरायणं यदुश्रेष्ठमक्रूरम्। तेन सार्धं तौ कृष्णरामौ निश्चितमागमिष्यतः।

(प्रविशतोऽक्रूरचानूरौ)

अक्रूरः। नमो महाराजाय।

कंसः। अपि कुशलं महामतेरक्रूरस्य?

अक्रूरः। महाराज! सर्वं कुशलम्। भवदर्थं किं कर्तुं पारयामि?

कंसः। वदान्य अक्रूर! भवान् ममाकृत्रिम-सुहृद्। यदु-भोजवंशीयेषु भवादृशो बन्धुर्ममान्यः कोऽपि नास्ति। मम हितसाधने केवलं भवानेव समर्थः। बन्धुकृत्यमेकं भवतावश्यमेव सम्पादनीयम्।

यदुवराक्रूर! आगामिन्यां चतुर्दश्यां तिथौ मया धनुर्यागः करणीयः। तत्र गोकुलवासिनोः कृष्णरामयोर्नन्दालयवासिनोरुपस्थितिः काम्यते। स्नेहलवोऽपि भवतो मदर्थं विद्यते चेदेषा कृपा भवताऽवश्यमेव प्रकटनीया।

अक्रूरः। महाराज कंस ! रामकृष्णयोरत्रानयने को हेतुः ?

कंसः। (स्वगतम्) अपि ममाभीप्सितमस्मै विज्ञाप्यम् ? महामतिरक्रूरो न कदाप्यन्याय्यमाचरिष्यति, गुह्यं प्राकाश्यं नेष्यति वा। तत् कथं मया मेतव्यम् ?

(अक्रूरमुद्दिश्य) शफल्कतनय यदुश्रेष्ठ मम श्रेष्ठ-बन्धो ! मम निर्बन्धकारणं श्रूयताम्। मया सुनिश्चितं ज्ञातं व्रजवासिनौ रामकृष्णौ मम वधकारणमिति। तस्माद् येन केन प्रकारेण तौ मया हन्तव्यौ। तयोरत्रागमनं भवत्-प्रयत्नापेक्षि।

अक्रूरः। अपि तयोरागमनानन्तरं मयाऽन्यत् किमप्यस्मिन् विषये करणीयम् ?

कंसः। सत्यं शपामि, तदनन्तरं भवतोऽस्मिन् विषये अन्यत किमपि न करणीयम।

अक्रूरः। को भविष्यति एतयोर्मारणोपायः ?

कंसः। कुवलयापीड-हस्तिपादाभ्यां निष्ठुर-प्राणान्त-पेषणं प्रथमः कल्पः। ततश्चानूर-मुष्टिकादयो भवतः परिज्ञाता एव। आगतयो रामकृष्णयोर्मारणोपायोद्भावने न घटिष्यते कश्चन विलम्बः। कृष्णस्य मारणं कंसस्येच्छानुसारि अवश्यमेव भविष्यति।

अहो आनन्दः। अतः परं तल्पकीटपेषं पेक्ष्यामि वसुदेवः-प्रभृति-वृष्णि-भोज-दशार्ह-वंशीयान्। ततो मम राज्यकामुकं पितरं वृद्धमुग्रसेनं, तस्य भ्रातरं देवकमन्यान् सर्वान् विद्रोह-कारिणश्च।

परमसख ! जानासि किल मम बन्धुपक्षम्। श्वशुरो मम विश्वप्रथितो जरासन्धः। वानरराजो द्विविदो मम बन्धूत्तमः। शम्बर-नरक-बाणाः सर्वे महावीरा मम समर्थकाः परम-हितैषिणश्च।

तद् भवान् मथुराप्राणौ जगद्वरेण्यौ मथुराया हितं करोतु। तेन च कंसस्य। धनुर्यज्ञ-यदुपुरीसंदर्शन-व्यपदेशेन भवता तावत्र आनेतव्यौ।

अक्रूरः। ( क्षणं विचिन्त्य—स्वगतम् )

अप्यस्मिन् विषये साहायकं मया विधातव्यम्। अथवा भवितव्यं भविष्यति। श्रीकृष्णरामौ आनेतव्यावेव।

( कंसमुद्दिश्य ) राजन्! भवता यत् परिकल्पितं तद् भवतो हिताय स्यान्नवेति न जाने। श्रीरामकृष्णयोरानयन-विषयेऽहं भवतः साहायकं करिष्ये। किन्तु राजन्! ईदृशेषु विषयेषु दैवमेव बलवत्। मानवानामभिलाषसिद्धि-र्दैवापेक्षिणी।

कंसः। किं नामकं वस्तु दैवमिति? मयि शासति देवा अपि राज्यभ्रष्टाः पथिभ्रष्टाः कायभ्रष्टास्त्यक्तजीविता भविष्यन्ति। दैवं सर्वदा मम पदतलं लेढि। न कंसो दैवमुखापेक्षी। सत्यं जानीहि, यदुश्रेष्ठ बन्धुसत्तम! नाहं कदापि दैवमनुयामि, दैवमेव सर्वदा मम पदानुसरणं करोति। ततः केवलं कृपापूर्वकं रामकृष्णौ मथुरामानयतु भवान्। तदनन्तरं क्षणेनैव कंसः स्वकार्यसाधनं करिष्यति।

अक्रूरः। भगवानेव सर्वत्र प्रमाणम्।

( सर्वे निष्क्रान्ताः )

—०—

## पञ्चमोऽङ्कः

### प्रथमदृश्यम्

### अक्रूरस्य वृन्दावनागमनम्

अक्रूरः । अहो कृपा श्रीश्रीभगवतः । यात्रारम्भतः सर्वत्र दृष्टं शुभ-सूचकं दृश्यम् । प्रथममेव दृष्टं खञ्जन-युग्मम् ; तत चक्रवाक-युगलम् । मस्तकोपरि उड्डीयमानः शङ्खचिल्लः । शतशो दृष्टाः पन्थान-मुभयतः सवत्सा धेनवः । सर्वोपरि भगवान् स्वयं स्ववत्तसि मां संरुध्य गोकुलाभिमुखीकरोतीव ।

आनन्ददिने सर्वमेव घटते शुभं, सर्वं जायते मधुमयम् । अहो ! बहोः कालादनन्तरं पश्याम्यदूरे मधुमयीं भगवतीं यमुनाम् । तदत्रावेदयामि किञ्चित् प्राप्तकालम् ।

अलङ्घ्यकंसशासनादुपस्थितेऽद्य गोकुले
न मय्यरातिभावनां करोतु देवि ! केशवः ।
अलं भवेयमीक्षितुं तथा च पीतवाससम्
इतीह केवलाशिषं तवाहमम्ब कामये ॥

अहो मे मनसः प्रसन्नताप्राग्भारः । तत् स्तौमि मातरम् ।

( यमुनास्तुतिः )

विलुलितपत्र-शैशिरकणे कदम्बकलिकाप्रसाररमणे
दनुजनिपात-पूतहसने पलाशिदलशोभि-पीतवसने ।
विहगनिनादधन्य-विपिने विलोलहरिणीदृशातिक्रमने
मुररिपुवासहृष्टसदने विलासमनिशं तनुषे यमुने ॥१
मधुवनभूषण-गोकुलतोषण-मोचनकारण-देवनुते ।
मुनिगणहर्षण-कालियरक्षण-माधवराधन-भानुसुते ॥
जगदघनाशन-वृन्दाबनधन-गङ्गासुमिलन-नन्दयुते ।
जय यमुने जय हृतधरणीभय-धृतमणिसञ्चय-गुणपूते ॥२
कलकलहासिनि नूपुरनादिनि जनगणतारिणि धन्यकृते

नटराज-नटित-नर्तनविलसित-तरङ्गदोलित-पुण्यसृते
कलिन्दनन्दिनि शिखरिशिरोमणि-गिरिवरशोभिनि शान्तिभृते
जय यमुने जय नन्दतनयमय-नीलकमलचय-कान्तिवृते ॥३

अक्रूरः। अहो मे सुप्रभाता रजनी। अज्ञानताऽपि कंसेन महान् मे उपकारः कृतो यदहं गोकुलं प्रेषितः। सर्वथा श्रीकृष्ण-पाददर्शनार्थी आयातोऽस्मि व्रजम्। किन्तु कंस-संप्रेपितोऽस्मि इति मत्वा किं श्रीकृष्णः कह्लारगन्धि-स्वकरकमलं न मम शिरसि स्थापयिष्यति ?

अहो कदा नु द्रक्ष्यामि भगवन्तं; दृष्ट्वा च तस्य पाद-पद्मयोः पतिष्यामि ? अयमदूरत आयाति श्रीकृष्णः (रथान् निर्गत्य श्रीकृष्णं प्रणमति अक्रूरः)।

श्रीकृष्णः। (स्वगतम्) अहो! कंसेन प्रेपितोऽक्रूरो मां मथुरां नेतु-कामोऽद्यायातः। (अक्रूरमुद्दिश्य) स्वागतम् ? परिष्वजतु मामार्यः। (आलिङ्ग्य स्वगतम्) परं हृष्टोऽस्मि। अहो चन्दनलेपसुशीतलमालिङ्गनं भक्तजनस्य। (प्रकाशम्) इद-मासनं, एतत् पाद्यं परिगृह्यतां च मधुपर्कः।

(ततः प्रविशति नन्दराजः)

नन्दः। (स्वगतम्) अहो कस्यायं दृढविशालः शातकुम्भ-कुम्भ-शोभितो रथः ? यावत् समीपं गत्वा निपुणं पश्यामि। अहो दुरात्मनः कंसस्यायं रथः। तत् किमयमत्रागतः ?

अहो बुद्धम्! हतेषु केशिप्रमुखेषु कंसः
कृष्णं जिघांसुः स्वयमागतोऽद्य।
क्षेमं विधेयात् करुणो विधाता
पुरेव कुर्वन् द्विषतो विनाशम् ॥

भवतु रथिनं पृच्छामि। (अक्रूरमुद्दिश्य) को नु भवान् अन्तर्निहित-गूढसत्त्वः परमभक्तस्तथापि स्वकार्यसाधनोचित-चिन्ताक्लिष्ट इव लक्ष्यते।

अक्रूरः। गोपराज ! अहं नाम्नाऽक्रूरोऽस्मि। साम्प्रतं प्रेरितो मथुरातः कंसेन।

नन्दः। किमाह सम्राट् ?

अक्रूरः। एवम् आह—

धनुःसत्रमत्रारभेऽहं कियद्भि-
र्दिनैस्तत् प्रजा मे समायान्तु सर्वाः।
ममाज्ञा तदेषा, ततो गोपराजं
सरामं सकृष्णं विशेषात् प्रतीक्षे॥ इति।

ततस्तेनैवानुरुद्धोऽहमत्रागतोऽस्मि।

नन्दः। किन्तु भवान् मूर्त्त आनन्दविघ्न इव मत्समीपे प्रतिभाति। गोकुले वृन्दावने च वयं गोपा नागरकृष्टेर्बहुदूरे विद्यमानाः सानन्दं तिष्ठामः। न भवान् अस्माकमपकारकः स्यात् ?

अक्रूरः। गोपराज ! अहमात्मानं कृतार्थं मन्ये यद्भवदालये समागतोऽस्मि। श्रीकृष्णेन आलिङ्गितोऽहं भजे ब्रह्मानन्दम्। भवतोऽपकारं कोऽपि न कदापि कर्तुं समर्थो भविष्यति।

नन्दराजः। किन्तु अक्रूर ! अयमेक एव नयनमणिर्मम गृहस्य परिवारस्य गोकुलस्य च। एतेन विना न केवलं मम जीवनमेव किन्तु सर्वमेव भविष्यति तमोवृतं गोकुलस्य। श्रीकृष्णविरहदुःखं सोढुं नाहं समर्थो भविष्यामि !

श्रीकृष्णः। पितः ! धनुर्यज्ञव्यपदेशेन मम तत्र गमनं मथुरावासिभिरपेक्ष्यते। यज्ञसम्पादनसमये भवतामुपस्थितिरपि सर्वेषां प्रीतिकरी भवेत्।

नन्दराजः। तात! तथा भवतु। किन्तु मातुर्दशा त्वया न चिन्त्यते?

आ प्रातः शयनावधि प्रतिपलं संचिन्तयन्ती सुतं
नित्यं जीवति या गते त्वयि भवेत् तस्याः किमाश्वासनम्?
धृत्वा सा नवनीतमश्रुमलिनं गोपाल गोपाल हे
इत्याक्रोक्ष्यति सान्त्वनं किमु तदा तस्या विधेयं मया॥

यदा श्रीदाम-सुदामादायः सर्वे गोष्ठलीलाकामाः 'क भ्रातरौ कृष्णबलरामौ', इत्युच्चैराह्वानतत्परा निरन्तरं क्रन्दिष्यन्ति, कथमहं तेषां वा शान्तिमुपजनयिष्यामि?

यदा वृन्दाद्याः सर्वा गोपबाला 'हा कृष्ण हा कृष्ण' इति रोरुद्यमानाः श्रीकृष्णप्रत्यर्पणाय मां प्रार्थयिष्यन्ते, तदा वा किमहं सान्त्वनोपकरणं ताभ्यः प्रदास्ये? यदा वृन्दावनाधिष्ठात्री देवी पुष्पनेत्रैरश्रूणि विसृज्य मामुद्दिश्य केकाव्याजेन क्रन्दिष्यति, किं वा तदा मया स्यात् करणीयम्?

अक्रूरः। अहो कष्टं पितुः। देव! समाश्वसिहि। (स्वगतम्) नात्र किमपि मम करणीयमास्ते।

नन्दराजः। पुनः सेयं यमुना—वंशीध्वनी श्रवणेन या समुच्छ्वसिति, मुरलीध्वनि-श्रवणाभावाद् यदा सा शीर्णा गोकुलवासिनो हृतसर्वस्वान् करिष्यति, किं वा तदा मया करणीयम्?

कृष्णक्रीडासाक्षिणः परमबन्धवस्तमालकदम्बादयो यदा नीरसा दर्शितशाखाङ्गुलयः पत्रहीनाः श्रीकृष्णदर्शनाभिलाषा मृत्युपणमवलम्बमाना नित्यरोदनपराः शोषमेष्यन्ति, तदा वा मया किं करणीयम्?

श्रीकृष्णः। अहो पितुः कष्टम्। सर्वथाऽसहनीयमेतत्। पितः! पितः! सान्त्वनमवलम्बनीयं भवता गोकुलहिताय, सर्वेषां च कल्याणाय।

नन्दराजः ! अहो कष्टम ! अहो दौर्भाग्यम। भगवन ! पुत्रे जाते परमानन्दः। किन्तु तदपेक्षया शतगुणव्यथादायिनी मृत्युतीव्रतरा यातनापि पुत्रविरहव्याजेन त्वया सृष्टा ?

कथमहं तत सहेय ? ( हाम्वारवं श्रुत्वा ) श्रीकृष्णस्य मथुरागमनभयभीता-धेनव उच्चैं रटन्ति। अहो ! यदा एताः सर्वा दर्शनव्याकुलमानसा निरन्तरं रटिष्यन्ति, किं वा तदा करिष्यामि ?

यशोदा। ( प्रविश्य ) देव ! कुत्र गतो मे नयनमणिः कृष्णचन्द्रः ? ( श्रीकृष्णसमीपं गत्वा तमालिङ्गति ) अयम, अयम।

नन्दराजः। ( यशोदामुद्दिश्य ) देवि ! कंससकाशात समागतोऽयमक्रूरः श्रीकृष्णं मथुरां नेतुम्। न जाने किं नु भविष्यति।

यशोदा। मयि जीवन्त्यां न तत् कदापि कथञ्चन भवितुमर्हति। मम नयनपथान् मुहूर्तमात्रमपि वहिर्गते कृष्णेऽहं तदैव जीवितं त्यक्ष्यामि।

अहो निष्ठुरं जगत्! अहो ततोऽभ्यधिको निष्ठुरो भगवान्! भगवन! मातृहृदयस्य सन्तानवात्सल्यमासकमपूर्वं वस्तु किं न त्वं जानासि।

एकमात्रं जीवितसर्वस्वमयं मे नन्दनः श्रीकृष्णः। तात! तात ! मम हृदयं शतधा विदार्य त्वामन्तः संस्थापयिष्यामि। तत्स्थानं परित्यज्य न त्वं कदापि स्थानान्तरं यास्यसि।

( इति श्रीकृष्णवदनारविन्दं सतृष्णं निरीक्षते )

श्रीकृष्णः। किन्तु मातः! एषोऽक्रूरो राजसन्देशवाही गोकुलमागतः। अक्रूरो भक्तिसमृद्धो मां प्रति श्रद्धाशीलश्च तेन सह गमिष्यामि भूयः प्रत्यागमनायैव। आर्तजनसंरक्षणमेव मम जीवनधर्मः। धरित्री कंसराजपापभारपरिपूर्णा। जगन्मातः! जगदम्बिके ! तत्प्रतीकारार्थमनुमन्यस्व मम मथुरागमनम्।

अक्रूरः। मातः! सन्तानाहितकातरा मा भव। अखिलजगतो हितकारणं तव पुत्रः, कस्तस्याहितकरणे भविष्यति समर्थः? जले यथा जलजाः, उदुम्बरे यथा मशककदम्बकं, तथा जलचराः स्थलचराः खेचरा अन्ये च स्थावर-जङ्गमाः सर्वे अस्मिन्नेव निवसन्ति। एवमनेन प्राणन्ति, अस्मिन्नेव जीवन्ति, यथाकालं लीयन्ते चास्मिन्नेव। अस्यैव प्रसादाद् वाति पवनः, उदेति दिनकरः, अस्तं याति निशाकरः, शोभते नीलनभसि तारकामण्डली। सृष्टिस्थितिलयाः सर्वे अस्य करुणाकृत्यानि।

निखिलभुवनरक्षितुः केशस्पर्शमपि न कंसः कर्तुं शक्ष्यति। तेन जगज्जननि! विश्वसुतहितसाधनकारिणि! श्रीकृष्णस्यादिश मथुरागमनम्।

नन्दराजः। देवि यशोदे! धनुर्यज्ञसम्पादनकालेऽहं तत्र स्थास्यामि। स्नेहः पित्रोर्हृदयं करोति पर्याकुलम् इति ध्रुवमेव। किन्तु सन्तानपरमोज्ज्वल-भविष्यत्संविधानमपि पित्रोः प्रथमकर्तव्यम्। ततः अस्मिन् विषये तव पुनश्चिन्तनमहं प्रार्थये।

यशोदा। अहो पितापि न जानाति मातुः सन्तान-वात्सल्यस्य गभीरताम्। पुत्रः खलु स्वप्रचारी विलसति मातुर्ध्याने गहनगहनं, भगवदाशीर्धाराविग्रहस्तस्या नशजागरणे, सञ्जीवनौषधिर्मूर्च्छापनयने, तरणि भवसागरतरणे, वेदमन्त्रः परमार्थलाभाय।

नन्दराजः। देवि! मातृहृदयं किल अनिर्वचनीयं वस्तु इत्यहं जानामि, पितृहृदयमपि ततो न न्यूनमिति भवत्यपि जानातु। स्नेहनामकं स्वर्गीयं वस्तु पित्रोर्हृदये स्वत एव समं वसति, आत्मप्रकटनरीतिः पुनर्भिन्ना प्रतिभाति। तदिदानीम्—

कर्तव्यबुद्धिमनुसृत्य विजित्य मायां
प्रस्थानमङ्गलविधिं रचयात्मजस्य।

आशीः प्रसन्नमनसा जननीवितीर्णा
संस्मर्यते प्रवसतः परमा हि सम्पत् ॥
सुखं तिष्ठतु मम जीवनधनं श्रीमान् कृष्णः ॥
( इति सर्वे निष्क्रान्ताः )

—०—

## षष्ठोऽङ्कः

### श्रीराधाकृष्ण-संलापः

( ततः प्रविशतः श्रीराधाकुञ्जे श्रीकृष्णो राधा च )
श्रीराधासमीपे श्रीकृष्णस्य विदाय-प्रार्थनम् ।

श्रीराधा । नाथ ! कथं वदनं ते मेघाच्छादितचन्द्रवद् दृश्यते । अपि किञ्चिदशुभं जातम ?

श्रीकृष्णः । न हि देवि ! त्वयि जीवन्त्यां किं स्यादशुभमं ? तथापि चिन्तयामि—कर्तव्यसम्पादनायैव मानवजीवनं चेत्, कर्तव्य-प्रेम्णोः संघर्षोऽनिवार्य एव । तादृश्यां परिस्थित्यां किं वाऽस्माभिः करणीयम् ?

श्रीराधा । किं तत्राधिकचिन्तया । तत्र मे मतं शृणु,

उपनमति विरोधः प्रेम कर्तव्ययोश्चे-
ददयमुदसनीयं तत्र कर्तव्यमेव ।
अणुरिह ननु हानिः प्राणिकर्तव्यबाधे
भवति पुनरुदस्ते प्रेम्णि यज्जीवनान्तः ॥

तवात्र विसंवादश्चेत्—श्रीराधायास्तत्क्षणात् प्राणत्याग एव विधिनिर्दिष्टो वर्तते । नाथ ! सत्यं प्रतिजाने—यदि त्वं मां विहाय स्थानान्तरं गच्छसि, तर्हि तत्क्षणादेव प्राणानहं त्यक्ष्यामि । जगति सर्वं सहिष्ये, न कदापि कथमपि त्वद्विरहम् ।

श्रीकृष्णः। राधे जीवनदयिते जगद्वल्लभे! प्रतिजाने इति कथं भाषसे? पश्य,

संग्रामभूयिष्ठमिदं हि जीवितं
कलौ विशेषादिह पापसङ्कुले।
निर्बन्धमुद्वास्य तदत्र चेतसः
कार्यं यथाप्राप्तमखिन्नया धिया॥

आनन्दमयो त्वमानन्दं न विधास्यसि चेत् स्रष्टुः सर्वं सर्जनकर्म व्यर्थतां यास्यति।

श्रीराधा। नाथ! किन्तु कथमद्य त्वमित्थं लपसि? कथं वा हृदयं मे वेपते।

( हृदयव्यथां नाटयति )

भो राधावल्लभ, वृन्दावन-नाथ! मा तव राधायां वृन्दावने च कदापि निष्करुणो भव। सत्यं ब्रूहि किं संघटितम्।

श्रीकृष्णः। प्रिये कथयामि ते भूतार्थम्।

पापाचारो भारभूतो धरित्र्याः
कंसः क्रूरो न त्वयाकर्णितः किम्?
तन्नाशार्थं विप्रयोगो यदि स्यात
कांश्चित् कालानावयोः सोऽपि सह्यः॥

कंसेन प्रेषितो दूतोऽक्रूरो मां श्व एव मथुरां नेष्यतीति हेतो- 'मातापितृसकाशे' करुणां निवेद्य अनुमतिमहं लब्धवान्।

त्वमसि पूर्णप्रज्ञाशालिनी; अतीतानागत-विषयेषु त्वमेव स्वयं परमसंवेद्या पूर्णनिष्णाता सर्वज्ञा च। त्वत्संकाशे यथायथ-विषयोपस्थापने एकान्ततोऽसमर्थोऽहं केवलं प्रार्थये—गमनाय मे देहि प्रतिवचनमिति।

श्रीराधा। नाथ! यदि कृतप्रतिज्ञोऽसि गमनाय, तत मत्सकाशे आगमनेन किम्? युगे युगे ईदृशी मर्मच्छेदिका व्यथा नारीजीवनं सर्वथा विफलीकरोति।

क्रकच-चरितमेतत् प्रेम पुंसां प्रियाया
दलयति विशदन्तन्निर्यदप्युग्ररूपम् ।
सविषमिव पयो वा पातरम्यं दुरन्तं
घटयति हृदयस्थं मृत्युमस्या अकाले ॥

श्रीकृष्णः । राधे ! विश्वकल्याणहेतुके ! शृणु मद्वचनम । यथा तथा वा भवतु—

मदर्थमुत्कण्ठा सर्वथा परिहर्तव्या । मथुरागमनाय राजादेशो मया नोल्लङ्घनीयः । पुनश्च मन्ये—सङ्केतश्चायं भगवतः करुणाविस्ताराय । अन्तर्नेत्रं संप्रसार्य वीक्षसे चेत सर्वमेतत्तव दृष्टेर्गोचरीभूतं भवेदेव ।

श्रीराधा । नाथ ! यथा तथा वा भवतु, नाहं कदापि त्वां विहाय जीवनधारणे समर्था भविष्यामि । जानीषे किल सर्वं तिरस्करणं त्वदर्थं मया सोढ़म् । अपि सर्वमेतन्निरर्थकम् ?

त्वां प्राणाधिकवाञ्छितं मम मनोराज्ये विधायेश्वर-
माकौमारमहं तवैव पदयोरेकान्तसेवार्थिनी ।
सा सेवा भवताऽपि सादरमितः पूर्वं न किं स्वीकृता
किं वा विप्रियमद्य ते कृतवती यन्मां परित्यक्ष्यसि ? ॥

श्रीकृष्णः । ( स्वगतम् ) अयि जगतः परमसर्वस्वं नारीमनः ! केनापूर्वेण वस्तुतन्तुना निर्मितमसि ? त्वया संग्रथितं सर्वं जगत्; त्वयि निषण्णं सर्वं विश्वम् ।

( श्रीराधामुद्दिश्य ) श्रीकृष्णदयिते ! भूयोऽपि प्रार्थये तवानुमतिम् । अचिरेण कालेन निश्चितमहं प्रत्यागमिष्यामि ।

श्रीराधा । कथमपि न, कथमपि न । ( इति रोदिति )

श्रीकृष्णः । ( राधाया अश्रूणि प्रमार्ज्य ) परमप्रेममयि ! भूयोऽपि चिन्तय । परार्थे आत्मसुखविसर्जनमेव शाश्वतिको धर्मः । चराचर-हितव्रते ! जगतो हितसाधनाय कुरु चिन्तनमोक्षणम् । आवयोर्विरहो न कदापि भविता ।

श्रीराधा। नाथ नाथ, नाहमात्मानं प्रभवितुमीशे।

कर्तुं मां नयनातिथिं किमिव वा येनच्छलं नाश्रितं
येनाब्दप्रतिमो मया विरहितेनामानि हन्त क्षणाः।
तिष्ठन्त्यां मयि नेत्रवर्त्मनि महोत्साहश्च यस्याभवत्
कच्चित् कृष्ण स एव नन्दतनयस्त्वं भाषसे राधया ?॥

श्रीकृष्णः। (स्वगतम्) अहो कष्टम्। परमेश ! वृन्दावनाद् वहिर्गते मयि का भवेदस्या अवस्था, एवमन्यासां गोपीनां वा ? (प्रकाशम्) प्रिये ! समाश्वसिहि समाश्वसिहि।

राधे मानिनि मे प्रसीद न हि मां संभावयान्यादृशं
त्वत्प्रेमैकधनस्त्वदेकशरणः कृष्णोऽस्मि सोऽहं प्रिये।
मा मा मुञ्च मृगेक्षणेऽश्रु मथुरां यास्यामि नाहं क्वचित्
कामं जीवतु कंसभूपतिरलं संक्लिश्यतां काश्यपी॥

श्रीराधा। (विचिन्तयन्ती)

अहो ! धराया दुःखभारोऽवश्यमेव मोचनीयः। प्रियो मे न गच्छति चेन्महत् कष्टमापतितं स्यात्। (श्रीकृष्णं प्रति)—नाथ ! यदि तदेव सत्यं, नाहं तव गमने वाधा भवेयम्, किन्तु कंसनिधनादनन्तरं त्वया प्रत्यागन्तव्यम्। अहं कथञ्चन कालं नेष्यामि। (इति रोदिति) (उभौ निष्क्रयान्तौ)॥

—०—

# आनन्द-राधम्

## सप्तमोऽङ्कः

( अक्रूरस्य श्रीकृष्णेन सह मथुरायात्रा )

स्थानं वृन्दावनीयो राजमार्गः

[ रथस्य उपरि श्रीकृष्णोऽक्रूरश्च उपविष्टौ ]

श्रीकृष्णः । ( स्वगतम् ) अहो, एकदा मया प्रतिज्ञातमासीत्—वृन्दावनं परित्यज्य पादमेकं न गच्छामीति । किन्तु कार्यानुरोधात्तस्य व्यतिक्रमोऽद्य संघटते ।

अक्रूरः । तात, एते ते गुरवः, स्नेहधन्या गोपकन्याश्चागच्छन्ति ।

श्रीकृष्णः । सकरुणं पश्यामि—

यशोदा माता मे तदनु जनको नन्दनृपतिः
प्रिया राधा-वृन्दाप्रभृतय इमा गोपललनाः ।
सखायश्चाप्येते सुबल-बल-दामादिशिशवो
रुदत्प्राया दीनाः सजलनयना यन्ति शनकैः ॥

तात दानपते ! किमहं पितरौ वदामि, कथं पर्यवस्थापयामि राधामन्याश्च गोपबालाः, कथं निवर्तयिष्यामि प्राणप्रियान् सखीन्, अहं वा कथमेतान् परित्यज्य मथुरां यास्यामि ? कष्टं भोः कष्टम् ।

कार्यानुरोधः परमा विपत्ति-
र्यदेष नापेक्षत एव भावम् ।
न वत्सलत्वं न च वा सखित्वं
प्रियानुरागं न पुरस्करोति ॥

( त्वरितं प्रविशन्ति यशोदा, नन्दराजः,
सखीपरिवृता राधिका, सुवलादयश्च )

नन्दराजः । ( स्वगतम् )

श्रीकृष्णं मथुरापुराय न चिराद् यान्तं विदित्वा प्रजाः
सर्वा मे द्रुतमापतन्ति गणशः स्त्री-बालवृद्धातुराः ।
पिण्डीभूतमिवाद्य गोकुलमहो श्रीकृष्णयात्रापथे
लोकप्रीतिकरत्वमद्भुततरं वत्सस्य कृष्णस्य मे ॥
अहो गोपीनामश्रुधारासातत्यम् !

एता रुदत्यो नयनाश्रुधारया
जाने सिसृक्षन्त्यपरां यमानुजाम् ।
अत्येतु कामं यमुनां चिरन्तनीं
कृष्णः कथं साश्रुजलां तरेदिति ॥

यशोदा । हन्त गोकुलनगरं निमिषेण जातं गहनारण्यम् ।

श्रीकृष्णः । ( रथादवतीर्य पितरौ प्रणम्य )—

नवनीतादपि मृदुलं स्नेहनवनीतमहो हृदये ।
यत्त्वं धारयसि जननि ! ततस्त्वमसि भुवने गरिष्ठा ॥
गोकुलनरपते तात ! सौभाग्यं मत्तः समधिकं कस्य ।
यस्य स्नेहमयस्त्वं जनकोऽसि योगमायाया जनकः ॥

यशोदा ।

कृष्ण स्नेहगुणेन गोकुलजनानाकृष्य पूर्वं त्वया
नीते सार्थकतां यथातिमहतीं कृष्णेति नामाक्षरे ।
कृष्टैवं विततैर्दयाप्रभृतिभिः सद्भिर्गुणैः साम्प्रतं
लोकानां हृदयानि सर्वभुवनस्याव्याज-बन्धुर्भव ॥

किञ्च, न त्वया कदापि कथमपि साहसे पदं कुर्याः । एषा ते मातुराज्ञेति मन्यस्व ।

नन्दराजः। कृष्ण ! अमोघा मातुराशिषः, नेदं वाक्यमात्रमवेहि। किन्तु कथं बलरामश्चिरयति ?

कृष्णः। प्रतिगृहीताः सादरञ्च सबहुमानञ्च मातुराशिषः। किञ्च,

अनुल्लङ्घितपूर्वा ते मातराज्ञा यथा मया।
एवमेषाऽपि यत्नेन सर्वदा पालयिष्यते॥

यशोदा। भो हृदयरत्नाकरानर्घतम-रत्न !

मम चक्षुषोरसि आनन्दकज्जलं, वृन्दारण्या-विकच-कुसुमानां त्वमसि दिगन्तव्यापी मिलित-सुगन्धः। पुत्र ! मातुराशिषा तव पथि चिरातिमृदुगामी सर्वक्लान्तिहरो मलयमारुतः सदा वहतु।

वत्स, सत्यं कथय कदा त्वं पुनरागमिष्यसि ? तवागमनपथं पश्यन्ती तव विरहावधिदिनं गणयन्ती कथमपि कालं यापयिष्यामि।

श्रीकृष्णः।

स्नेहेन ते जननि नित्यमपार्थिवेन
संवर्धितो यदवसं ननु गोकुलेऽस्मिन्।
स्मृत्वा तदेतदचिरान्मथुरापुरीतः
प्रत्यागमे द्रुतमहं नियतं यतिष्ये॥

अक्रूरः। पितरौ गोपवृद्धौ ! समाश्वसितम। नायमवसरः शोकस्य। ननु प्रवसतोः पुत्रयोर्मङ्गलाचारो विधीयताम्।

[ यशोदा श्रीकृष्णस्य मस्तकमाजिघ्रति। पिता स्थापयति मस्तकोपरि दूर्वादलम् ]

नन्दराजः। वाता वान्तु शिवाः पुत्रौ प्रसन्नाः सन्तु वां दिशः।
तरवो दधतु क्षेमं निष्कण्टक-फलोत्तराः।

अक्रूरः। आशिषः पित्रो रामकृष्णौ ! प्रतिगृहीतम्। अतिपतति यात्रावेला। ( श्रीकृष्णो रथस्योपरि उपविशति। )

श्रीराधा। अहो ! अतिक्रान्तो लोचनपथं गोकुलनाथः। अनीशास्मि

शोकविह्वलान्यङ्गानि वोढुम्। [श्रीराधा मूर्छिता मातुर्यशोदायाः पादयोः पतति ]

यशोदा। माता राधिके! दीर्घो वत्सासि पिञ्जरे सारिका इव स्थित्वा त्वं नित्यं मां श्रीकृष्णनाम स्मारय। अयि शाश्वतप्रेमस्वरूपिणि! अश्रूणि निर्गमय्य मा त्वं भुवं समधिकक्लेशपूर्णां कुरु। ( निपुणं विलोक्य ) अहो मूर्च्छितेयम्। वत्से! राधिके! समाश्वसिहि, समाश्वसिहि।

वृन्दा। अहो कष्टम्। नास्त्येव प्रियसख्याः सान्त्वनाकारणम्।

आश्रित्य यं चिरमहो सहकारवृक्षं
वल्ली व्यवर्धत सुखं खलु माधवीयम्।
तस्मिन् गते विधिवशादतिदूरभावं
कं सा स्वजीवनकृते पुनराश्रयेत॥

अपि च,

उपमा

मर्माण्यस्या विरहदहनः शोषयत्यूर्ध्वशोषं
शुण्डाघातो व्यथयति यथा पुण्डरीकस्य नालम्।
यद्वा वज्रं नयति विलयं सप्तपर्णस्थ-तोयं
नैदाघो वा दवजदहनः सूर्यमुख्याः स्वकोपम्॥

ललिता। मातृस्नेह-प्रियाप्रेम्णोर्द्वयोर्भारोत्तरो हि कः।
क एवं रससारोऽस्ति यः सूक्ष्मं परिमातु तत्॥

विशाखा। अहो! धरणीलुठितायां हेमलतायामस्यां जगत् सर्वसौन्दर्यतो वञ्चितं सत् जातं ग्लानिपूरितं तमोवृतं च।

रथस्थः श्रीकृष्णः। ( सर्वान् उद्दिश्य—उच्चैः )

भो भो मे गुरुजना जीवनसहचराः प्राणप्रियाश्च! सर्वदा स्मरिष्यामि भवतां सर्वेषामशेषस्नेह-कर्मजातम्।

( अक्रूरमुद्दिश्य ) अयि मथुराराजसन्देशवाहिन्! धीरं चालय रथम्।

( श्रीकृष्णाक्रूरौ शनैर्बहिर्गच्छतः )

नन्दराजः । अहो दृष्टेर्बहिर्गतो नन्दनो मे । पुत्र ! जगतः सर्वं दुःखमपहर ।

राधेऽम्ब वृन्दे सुवलादिवत्सा
गृह्णीत भक्त्या हरिनाम यूयम् ।
श्रीकृष्णमेनं मम गोकुलं वा
यथा न काचिद् विपदभ्युपेयात् ॥

यशोदा । हा पुत्र ! कदा पुनरावर्तिष्यसे ? (इति उच्च रोदिति)

(सर्वे निष्क्रान्ताः)

—०—

## अष्टमोऽङ्कः

(प्रहसन-दृश्यम्)

[ स्थानम्—मथुराराजवीथी । समयः पूर्वाह्णः ]

( ततः प्रविशतो रजको राधापदो नापितः कृष्णाकरश्च )

रजकः—राधापदः ।

भ्रातः कृष्णाकर ! महाधुरन्धर एष विपिनविहारी नन्दनन्दनो य आगमनमात्रमेव चिलिचिमन्युब्जां मुख-विजिताब्जां कुब्जां पादाक्रान्तपादं करगृहीत-ग्रीवं लम्बवत् सरलां कृतवान् ।

अहो कृष्णनाम्नो माहात्म्यम् ! गोकुलीयः कृष्णाकरो नलमीनन्युब्जां सरलीकरोति, मथुरावासि-कृष्णाकरस्तु सहज-सरलं कुब्जीकरोतीति—भेदस्तु तन्मात्रम् ।

नापितः-कृष्णाकरः । यथाऽहं कृष्णस्य करोऽस्मि, तथा राधापद ! त्वमपि राधायाः पादोऽसि ।

राधापदः । अतो मां त्वत्तो गरीयांसं मन्यस्व । पश्य—

कृष्णाकरः परिचरति राधापदं सततं यथा दरेण।
लोभाकृष्टोऽपि शिशुर्न मोदकमपि तथादरेण धत्ते ॥

कृष्णाकरः। भ्रातः! स खलु प्रेममहिमेति कविसमयः। किं तेन श्रमिकयोरावयोः? परमार्थतस्तु करस्य मे कार्यं क्षौरम्, पादस्य तव वस्त्रधावनम्। यथा तथा वाऽस्तां, आवां सगोत्रौ। न्यायत एव गोपसुन्दरोऽपि नरसुन्दरस्य मम (इत्यर्धोक्ते) न हि न हि तव मम च पक्षान्तर्भूतः अस्मिन् वर्तते तवार्धं मम चार्धं; तवार्धेन अस्य कर्म गोचारणं, ममार्धेन पुनर्गोदोहनादिकम्।

राधापदः। भ्रातः कृष्णाकर! सुष्ठु त्वमुक्तवान्। प्रसङ्गात् स्मराम्यस्य सर्वांशित्वम्। पश्य—

जन्मार्धरात्रे बहुलार्धपक्षे
स्थितिः पदार्धेन गतिः पथार्धे।
वंशे यदूनां जनिरस्तु कामं
प्रपालनं गोकुल एव बाल्ये ॥

शरीरं यथा तथा, चलन-वलनेऽस्ति चातुर्यम्।

कृष्णाकरः। शरीरं यथा तथेति कीदृशम्? तत्रार्द्धत्वं कथं युज्यते?

राधापदः। कथं न? तस्य शरीरस्यार्धं भवति दृष्टेर्गोचरीभूतम्? अन्यदर्धं राजते लीलायिते त्रिभङ्गरङ्गैः।

कृष्णाकरः। राधापद! सुष्ठु सर्वमवधारय। त्वमसि पादः, अहमस्मि करः। पादकरयोर्मध्यस्थले त्रिभङ्गोऽसौ कुब्जां सहज-सुभगां करोतीति किमाश्चर्यम्?

विशेषविद्भिः पुनरेवमुच्यते
न मुच्यतेऽनेन मनः शरीरिणाम्।
स्थानञ्च तत् पादकरान्तरालगं
तेनापि सा सिध्यति मध्यवर्तिता ॥

नाम्ना कृष्णः, गोपाङ्गना विशेषेण समाकर्षति च। श्रूयते

गोकुले नन्दनन्दनस्यानुपस्थितिहेतोः गोपरमण्यो मृतकल्पा जाता इति।'

राधापदः। कृष्णाकर! यद्येतादृशोऽस्य गुणगरिमा तत्त कथमेष वराकं राजरजकं हतवान्? हननकारणं पुनस्तुच्छं वस्त्रग्रहणम्। गोकुलधाम्नो नवनीतचौरेण वस्त्रलुण्ठनं हत्यापूर्वकम्? कृष्णाकर! गोपसुतः साम्प्रतमुज्ज्वलराजपुत्रवेशधारी सवलाको दुर्दिनमेघ इव विभाति।

कृष्णाकरः। किन्तु अस्यात्रागमने कारणं किम्? एष नारीचित्तचकोरो वृन्दावन-शारदफुल्लज्योत्स्नां परित्यज्य कथं कुब्जाखद्योत-प्रभां सेवितुमत्रागतवान?

राधापदः। भ्रातः कृष्णाकर! राज्ञा कंसेनायमानायितो धनुर्यज्ञ-निरीक्षणार्थमिति श्रूयते।

कृष्णाकरः। अथ राज्ञः कंसस्य गोदोहनमात्रचतुरेण गोपसुतेनैतेन किं प्रयोजनम्?

भ्राता राधापद! श्रूयते अक्रूर एव एनं मथुरानगरमानीतवान।

राधापदः। वाढम्। अक्रूरः परमधर्मप्राणः; नासौ अन्यायं कदापि करोति करिष्यति वा। असज्जनेन असज्जनस्य संयोगः सहजबोध्यः। किन्तु कथं कंसेन सहाक्रूरस्य योगः?

असताऽसज्जनस्येव सता योगः सतो भवेत्।
कथं सदसतोर्जातं सख्यमक्रूरकंसयोः॥

कृष्णाकरः। राधापद! यथा त्वया सह मम योगः। दारुणासज्जनेन सह महासज्जनस्य मम संयोगः। दैवमेवात्र कारणम्।

राधापदः। मत्तस्त्वं साधुतरोऽसि। अरे भण्डतपस्विन्! तव चरित्र-स्योत्कर्ष-विषये सर्वमहं जानामि। त्वं स्वयमेव मन्निन्दावादं न प्रत्याहरसि चेत, अहं कंसराजसविधेऽस्मिन् क्षणे एव यास्यामि विहित-विधानार्थम्।

कृष्णाकरः । तत्र भयं किम् ? गच्छ रे गच्छ । मम नाम कृष्णाकरः, त्वं च राधापदः । राधापदरूपस्त्वं कंसस्य पादलेहनं करोषि चेत् राधानाम्नः कलङ्कोऽनिवार्य एव । अहो आनन्द ! कृष्णाशरणस्य मे भयं किमपि नास्ति ।

राधापदः । कृष्णाकर ! पितृदत्तं नाम मे राधापद इति । नाहं कस्मै अपि धारयामि, कुतः स्यां पादलेही । नाहं पादलेही राधाया वा कंसस्य वा । अहं स्वशक्तौ विश्वसिमि । प्रयोजने सति कंसमपि अहं हन्मि । ( भयं नाटयित्वा ) कस्य एष पदशब्दः ?

( ततः प्रविशति राजपुरुषः )

राजपुरुषः । अरे रे गेहेनर्दिन् !

कंसस्य हन्ता कतमः कुतो भवान्
उल्लम्फनेनेच्छति तर्तुमर्णवम् ।
प्रोष्ठीव पृष्ठस्फुरणाज्जलाशये
कल्लोलमुत्पादयितुं समीहते ॥

पश्य अदूरे याति स्वयं महाराजो मल्लक्षेत्रं चानूर-मुष्टिक-समन्वितः । आत्महननं न कामयसे चेत् तत्र चल ।

राधापदः । कल्याणभद्र महोदय ! नाहमस्मि कथञ्चन महाराजस्य कुत्सापरायणः । एष कृष्णाकर एव दोषी । स एव कृष्णस्य आश्रयमुद्घोष्य कुरुते आत्मश्लाघाम् । नाहं महाराजस्य कंसस्य विरुद्धवादी कदाचन आसं भविष्यामि वा ।

कृष्णाकरः । भोः ! शासनपल्लीयेषु श्रेष्ठन्यायावतार ! भवान् स्वयमेव स्वकर्णाभ्यां श्रुतवान् तदुक्तिम् । मया केवल-मनुवादः क्रियते—

किञ्चिन्न कस्मायपि धारयामि
कुतः पुनः स्यां परपादलेही ।

शक्तावहं विश्वसिमि स्विकायां
प्रयोजने कंसमपि प्रहन्याम् ॥

राजपुरुषः । ( कृष्णाकरमुद्दिश्य ) अयि भोः कृष्णागोपपक्षपातिन् ! नैकेन हस्तेन जायते करतालशब्दः । युवामुभावेव समं दोषिणौ । ततो मया साकमागच्छतम् ।

( हठात् कंसस्य सङ्केतध्वनिं श्रुत्वा ) ( स्वगतम् ) किन्तु किं संघटितम् ? महाराजो मामन्विष्यति वा ? अथवा किमेतस्य कटुभाषणं श्रुतम् ?

( कृष्णाकर-राधापदौ उद्दिश्य ) मूढौ भृशं क्रुद्धो महाराजो युवामाह्वयति । महाराजसकाशं चलतम् ।

[ रजक-नापितौ राजपुरुषस्य पादयोः साष्टाङ्गं पततः । ]

कृष्णाकरः । राज्यपालक महात्मन् राजश्यालक ! मां रक्ष ।

राधापदः । माञ्च ।

( उभौ अन्योन्यवदनमवलोक्य )

कृष्णाकरः । भ्रातः ! महाराजो निर्विण्ण इव लक्ष्यते, एष एवाकारणमस्मान् भीषयते ।

राधापदः । सत्यम्, तदवसरेऽस्मिन् भीमवेगेनाहं पलाये ।

( तथा करोति । )

कृष्णाकरः । तथाऽहमपि ( धावन्नेव सन राजपुरुषेण धृतः । )

कृष्णाकरः । महात्मन ! असौ दुष्टो राधापदोऽकाण्डं कृत्वा पलायितः । नाहमपराद्धोऽस्मि । तद् रक्ष माम ।

( पुनः पादपतनं नाटयति । )

राजपुरुषः । सङ्गिनो दोषेण कारावरणं—नियम एष शाश्वतिकः । तदागच्छ ।

( उभौ बहिर्गच्छतः )

( इति विष्कम्भकः )

—०—

## द्वितीयदृश्यम्

[ कंसश्चानूरश्च प्रविशतः ]

कंसः। चानूर! किं किं मया न कृतं मथुराराज्यस्य सुशासनार्थम्। दुर्बलो नृप उग्रसेनो मम पिताऽपि केवलं साम्राज्यश्रीवृद्ध्यर्थं मया कारायां रुद्धीकृतः। पुनः कारारुद्धौ वर्तेते देवकी वसुदेवश्च।

चानूरः। राजन्! कथमेतौ द्वौ निर्मुक्तौ पुनः कारागारे संप्रेषितौ।

कंसः। दैवभाषणादियं मे आसीत् प्रतीतिर्यत् सत्यमेतौ न मम भय-कारणम्। पुनः, बहुधा विचिन्त्याक्रूरस्य राम-कृष्ण-समानयनाय वृन्दावनप्रेषणकालात् प्रागेवाहमेतौ कारायां प्रेषितवान्। छिद्रान्वेषि खल्वमङ्गलम्। अपि च—

ययोः सुतो मे मरणस्य कारणं
हितौ भवेतां मम तौ कथं वद।
नितान्ततिक्त-प्रकृतेः प्रतानिनी
किं कारवेल्ल्या मधुरा क्वचिद् भवेत्॥

चानूरः। तत् सुष्ठु कृतं भवता। किन्तु गोकुलेऽत्याचारेण किम्?

कंसः। चानूर! प्राज्ञो नारदो मामित्थमुपदिष्टवान् यत् सत्यं ब्राह्मण-वेद-गवामहितसंसाधनद्वारैव भगवतोऽनिष्टाचरणं कर्तुं शक्यते। तस्योपदेशमहमक्षरशोऽनुसरामि।

चानूरः। धनुर्यज्ञः कथं प्रवर्तितः?

कंसः। अक्रूर एव तत्रोपदेष्टा। वार्तानुसारेण बलरामः कृष्णश्च मयाऽत्रानीतौ।

चानूरः। महाराज! अक्रूरप्रत्ययाद् धनुर्योगप्रवृत्तिः किं नीतिशुद्धा?
नागं गोकुलवासिना कुवलयापीडं हतं पश्यत-
श्चिन्ता युक्तिमती समाद्य हृदये धत्ते पदं दुर्जया।
अक्रूरेण धनुर्मखाय भवते दत्तोपदेशावली
स्यात् कृष्णस्य हिताय वा? ननु दुरुन्नेयं नराणां मनः॥

कंसः। मा माऽशुभं भण। तथाप्यागते दुर्दिने बन्धुरपि वैरी भवतीत्यपि न विस्मर्तव्यम्।

चानूरः। राजन्! भवत्पोषितो मल्लोऽहं प्राणव्ययेनापि भवत आनृण्य-मन्नस्य विधास्यामि। भवत आदेशोऽवश्यमेव मया शिरसि धारणीयः।

कंसः। मदादेशात् त्वमेव श्रीकृष्णेन सह युध्यस्व मुष्टिकश्च बलरामेण। (चानूरमुद्दिश्य) चानूर, तदेहि मल्लयुद्धार्थं यज्ञसदनमेव गच्छामः। (इति निष्क्रान्तौ कंसचानूरौ)।

(धनुर्यज्ञस्थानम्। राजमञ्चे आसीनः कंसः। परितः सभासदः। मल्लभूमौ उद्धव-नन्दराज-चानूरादयः कृष्ण-बलरामौ च)

चानूरः।

हे कृष्णाग्रज हे बलानुज युवां मल्लाग्रगण्यौ मतौ
दैत्यान् केशि-वकादिकान् यमगृहं यन्नीतवन्तौ वने।
सम्राट् प्रीतमना दिदृक्षुरभवत्तन्मल्लयुद्धोत्सवम्
अस्माभिः कुरुतं युवां तमधुना पश्यन्तु सभ्या इमे॥

कृष्णः। मल्लवर! सुष्ठूक्तं त्वया।

उक्तं यद्भवता न तत्र विमतिः काऽप्यावयोर्वर्तते
राज्ञः प्रीतिरुपार्जिता यदि ततः किं वा प्रजानां प्रियम्।
किन्त्वावां हि शिशू स्वतुल्यवयसा युद्धं विधातुं क्षमौ
नान्येनातिबलेन शास्त्रविहितः सांग्रामिकोऽयं विधिः॥

चानूरः।—

विषधरस्य हरेरपि वा शिशो-
र्न गणनापथमेति वयःक्रमः।
सह मया समरं कुरु तद्धरे
सह बलेन करोतु च मुष्टिकः॥
(मुष्टिक! मुष्टिक! अत्रागच्छ।)

कंसः। यथा चानूरो भणति, त्वं बलरामेण सह मल्लरङ्गे युध्यस्व। चानूरः स्वयं कृष्णेन सह योत्स्यते।

(उभयपक्षीययोः मुष्टामुष्टि युद्धं प्रवर्तते)

कृष्णः। अचिरेणैव तव प्राणनाशः करिष्यते। तदनु तव प्रभोः कंसस्य। वक्षसा मे मुष्ट्याघातं गृहाण यथा श्वासरोधस्ते संजनिष्यते। (इत्याघातं करोति)

चानूरः। भो गोपवृद्धे गोपापसद! स्वकृतकर्मणः फलमाप्नुहि।

(इति कृष्णं मुष्ट्याहन्ति)

(अथ कृष्णः चानूरं प्रहारजर्जरं कृत्वा करोति भूतल-शायिनम्)

[अन्यतो बलदेवोऽपि मुष्ट्याघातक्रमेण मुष्टिकं करोति प्राणहीनम्]

[अनेन क्रमेण कूटः निपातितो रामेण, पादाग्रभागेण च विगतजीवितौ कृतौ मल्लौ शलतोशलौ श्रीकृष्णेन]

कंसः। (वाद्यानि निवार्य) भो राजपुरुषाः!

निःसार्येतां रामकृष्णौ पुरान्मे
दुष्टात्मायं वध्यतां नन्दगोपः।
वृद्धस्तातो हन्यतामुग्रसेनो
ग्राह्याः प्राणाश्चापि शौरेः प्रसह्य॥

कृष्णः। (कंसमुपेत्य) अयि परस्वहारक दुर्वृत्त कंस!

कृत्वा कारान्तराले पितरमतिखलस्त्वं मदान्धः प्रकृत्या
भग्नीं भर्त्रा समेतामहह निगरितां व्याधवृत्त्या व्यधासीः।
यद् गो-विप्रार्भकाणामनुदिनमतनोर्हिंसनं तस्य तस्य
रे निर्मर्याद पक्वं गुरु दुरितफलं भक्ष्यतां कुक्षिपूरम्॥

कंसः। रे रे अकालवृद्ध!

जात्या गोपः प्रकृत्या पशुरसि गहना राजनीतिर्नृपाणां
नास्ते तेऽत्र प्रवेशो विरमय रसनां संसदेषा न गोष्ठम्।

रे गोपीजार तारस्वरमतिकरुणं काममाक्रन्द वन्धून्
दुर्वृत्तानां विनेतुः कथमपि न हि ते निष्कृतिः कंसभूपात् ॥

कृष्णः । त्वया संप्रेषिता आसन्नितः पूर्वं वहवोऽसुरा दानवाश्च । नैकोऽपि वृन्दावनतः स्थानान्तराद्वा त्वत्सकाशं प्रत्यावृत्तः । पापिनः पतनमवश्यं भावीति जगज्जानातु । कियद्दूरं गत्वा पापी स्वत एवावसन्नो भवति ; सङ्गिनश्चापद्यन्तेऽवसादम् । स्वस्य पिता, भगिनी, भगिनीपतिः—स्वार्थान्धेन त्वया को वा न जर्जरितः पीडया ।

कंसः । किन्तु कस्त्वं तद्भाषणाय । राजाऽहं राजनीतेरनुरोधात् सर्वं कृतवान् । शृगालो भूत्वा कथं सिंहवत् करोष्यारावम् ।

कृष्णः । रे अत्याचारमूर्ते धराभार ! तवापसारणादद्य धरित्री वीतभारा वीतकलङ्का च भविष्यति, ध्रुवमहं त्वामद्य शमनधाम प्रेषये । आत्मकर्मफलं भुङ्क्ष्व ।

कंसः । अये ! कर्कटीफल ! अचिरादेव रक्तवर्णधरो वहुधा विद्रावितो भव । ( इति धनुस्तीरं क्षिपति )

कृष्णः । रे मूढ ! न जानासि कस्मिन् जङ्गले कीदृशो व्याघ्रो वसति । साम्प्रतं त्वादृशश्वापद-सङ्कुलं जातं समग्रं जगत् । तस्माद् व्याघ्रवद् रक्तचोषं त्वामहं मारयिष्यामि ।

कंसः । ( लम्फपूर्वकं पार्श्वान्तरं गत्वा ) असि-चर्म परिगृहीतं मया । अनेनाद्य ते जीवितनाशं करिष्यामि ( इति चतुर्दिक्षु परिभ्रमति )

कृष्णः । कंस ! अकारणदर्पस्फीतेः परिणतिर्भयङ्करी । मदान्धस्त्वं पापपुण्ययोर्भेदविबोधेऽपि जातोऽस्यसमर्थः । अथवाऽनेन अकारणभाषितेन किम् ? अचिरेण गच्छ यमसदनम् ! ( इति उल्लम्फ्याक्रामति ) ।

कंसः । अहो ! अमङ्गलम् अमङ्गलम् स्वत इव मम मस्तकात् भ्रष्टं

मुकुदम्। कष्टं कष्टं भोः! परित एव पश्यामि कृष्णं—घोरकृष्णरूपं सर्वमेव प्रजातम्।

हा हतोऽस्मि मन्दभाग्यः। किंनु संघटितम्? किंवा मया करणीयम्? अहो विशालता सर्वगता च मम हनने उद्-युक्तस्य चिरशत्रोः कृष्णस्य।

उन्मील्य नेत्रे अथवा निमील्य
पश्यामि सर्वत्र विशालकृष्णम्।
स्तम्भेषु कुड्येषु सदोगतेषु
राजासने चापि विराजमानम्॥

उद्धवः। (उत्थाय) कंस! परमसौभाग्यं तव यदन्तिमसमये परितः पश्यसि श्रीकृष्णम्। वलोद्धतस्त्वं श्रीकृष्णस्य सप्ताग्रजान् निहतवान्। वलराम-कृष्णयो-र्हननाय प्रेषिता आसंस्त्वया गणनातीता असुरा दानवाश्च मायाविनः। तथापि—

सौभाग्यं ते कंस यन्नाशकाले
कृष्णं पश्यस्यग्रतो विश्वरूपम्।
आराध्यापि प्रेक्षते यन्न कश्चित्
तं त्वं साक्षाद्वीक्षसेऽलं विराध्यन्॥

कृष्णः। महामते उद्धव! कृतकर्मफलं को रोत्स्यति? तथापि प्रार्थयेऽस्यात्मनो मङ्गलं सर्वथा भूयात्।

(इति कण्ठरोधं करोति)

सर्वैर्गीयते

(सङ्गीतम्)

जयति जयति कंस-नृपति-वंशदहनदक्षः।
किरण-सान्द्र-कृष्णचन्द्र इष्ट-भुवनरक्षः॥१
धरणिभार-समभिहार-नियतोन्नतलक्ष्यः।
विहितरक्ष-सुकृतिलक्ष-धूतदुरितपक्षः॥२

पुण्यचरण-धनवितरण रक्षित-शतयक्षः ।
मार्गत्रय-कृतनिर्भय-भक्तलक्षलक्षः ॥३
सत्यमधुर-शिवसुन्दर-दुर्घट-समकक्षः ।
मधुर-सघन-ममताधन-सज्जनगणपक्ष्यः ॥४

—०—

## नवमोऽङ्कः

( गोकुले नन्दराज-भवनम् )

### उद्धव-दौत्यम्

नन्दराजः । यशोदे ! शान्तस्निग्धक्षणो सायाह्ने समागतो मथुरातः श्रीकृष्णवार्तावहो वृष्णिवंशीयानां प्रधानामात्यः प्राज्ञवर उद्धवः । श्रीकृष्णवार्ताश्रवणाय सर्व-गोपरमणीभ्यः सन्देश-महं प्रेषितवान् ।

यशोदा । नाथ ! धनुर्यज्ञसभान्ते श्रीकृष्णस्य पुनर्मातापितृ-सन्दर्शन-मूलिकोक्तिरद्य कार्येण परिणमिता किम ? किन्तु कथं न कृष्णः स्वयमागतः ?

अपि स वृन्दावनं न स्मरति ? सेयं सरिद्वरा यमुना यस्या-स्तरङ्गभङ्गेषु अनन्तरङ्गैः स लीलां प्रकटयामास । तदिदं वृन्दावनं यत्र पवित्रतमा वसन्ति तुलसीपादपाः । सा वृन्दावनेश्वरी जगत्पावनी भक्तेः प्रीतेश्च शाश्वत-सुरधुनी राधिका ? एकान्ततस्तद्गतचित्ता गोपरमण्यश्च । अपि सर्व-मेतदतितुच्छम ?

नन्दराजः । अस्त्वेतत्तुच्छमतुच्छं वा । किन्तु सन्तान-वतसलां स्नेह-प्रतिमां धन्यस्तन्यदायिनीं जगति सर्वगुरुषु गुरुतमां त्वामपि यशोदां द्रष्टुं न तस्य मनः सरति ? अहो आयाति गोप-रमणीगणः । ( गोपरमण्यः प्रविशन्ति )

नन्दराजः। मातरः! सर्वासां कुशलमास्ताम्। समागतो मथुरातः कृष्णसखः परमप्राज्ञ उद्धवः। सोऽयं श्रीकृष्णेन प्रेपितः। तेन युष्माकं मेलनं मेऽतिवाञ्छितम्। अहो कृष्णसदृश-वेशभूषाधारिणस्तस्य कृष्णप्रेमापि गम्भीरम्। स आगच्छति; यशोदया सह अहं वहिर्यामि। यूयं कुरुतालपनम्।

( निष्क्रान्ते नन्द-यशोदे। )

( पीतवसनपरिहितो वनमालाधारी कुण्डलशोभित उद्धवः प्रविशति )

( गोपरमण्यस्तं परितः परिवारयन्ति )

वृन्दा। कृष्णराजसख! गोपीनां दारिद्र्यजर्जरे आसने उपविशतु भवान्। ज्ञानरहिता गोपयोपिता वयम्; राजजनसम्माननं माथुररमणीनां करायत्तमपरिज्ञातं चास्माकम्। तत् स्वगुणैः क्षमतां भवान् नः सर्वान् दोषान्।

उद्धवः। ( स्वगतम् ) अये इयमेव नारी श्रीकृष्णराजं मथुरातो वृन्दावने आनेतुं वहुलप्रयासं कृतवती। सर्वथा श्रीराधाप्राणप्रेयसी सा ममापि नमस्या। ( वृन्दामुद्दिश्य ) भोः श्रीकृष्णार्पितचित्ते !

धन्यं यज्जन्मनासौ यदुपतिरकरोल्लीलया चातिधन्यं
तीर्थं तत्, तत्र धन्यास्तृणविटपिमुखाः का कथा मानवानाम्।
यूयं तत्रापि धन्या निरुपधिकरतिं यत् परेशे कुरुध्वे
तन्मे सन्तूद्धवस्य क्षितिनतशिरसः कोटयो वः प्रणामाः॥

वृन्दा। ( साभिमानम् ) अयि यदुपतिसेवक! ज्ञातं किल माता-पितृसन्तोषसाधनार्थं संप्रेषितोऽसि गोपीहृदयवल्लभेन मथुरा-महाराजेन श्रीकृष्णेन। पितरौ त्यक्त्वा महाराजस्यात्र आकर्षणकारणमन्यत् किमपि नास्ति। कठोर-व्रतधारिणः सन्न्यासिनोऽपि मैत्रीं न त्यजन्ति। येषां कृते हृदये न विद्यते प्रीतिवन्धनं, तैः सार्धं बाह्या मैत्री प्रचरति, न हार्दिकी। यथा पुष्पैः सह भ्रमरस्य मित्रता।

अलमिह परिवादैं रीतिरेषैव लोके
जहति ननु जना यत् साधनं साध्यसिद्धौ।
व्रजभुवि स हि कार्यं साधयन् मादृशीषु
विहरति पुनरन्यं देशमन्विष्य कार्यम् ॥

उद्धवः। मातरः! श्रीकृष्णकार्यपद्धतौ आस्ते सर्वदा विशेषः। जगल्लीनस्याथ च जगदतिरिक्तस्य तस्य कर्म नान्यैः कर्मभिस्तुलनीयम्।

ललिता। (साभिमानम्) हृदये यदि तस्यासीदीदृशः सत्यो विरागः, कथमसौ कुब्जाबन्धुरस्मान् प्रेमसूत्रेणाबध्नात्। पुरुषाणां या क्रीड़ा, सा मृतिसमा नारीणाम्। अपि हृदयनामकं वस्तु केवलं नारीणां कृतेऽसृजद् विधाता। अहो! एतस्यैव पापाणपरुषस्य हेतोर्वयं गोपरमण्यः कुलहीना वित्तहीनाः सर्वस्वहीनाश्च जाताः। दिवसाभ्यन्तरे मुहूर्तमात्रदर्शनाय वयमाहारनिद्रादिकं सर्वमेवात्यजाम।

विशाखा। (गायति।)

मधुप! स्तब्धं किमु तव मधुर-गुञ्जनम्?
शोषित-हृदयमधु-व्रजधामकुलवधू-
धारासारि नेत्रवारि मूल्यहीनम्?
कुब्जिकावदनाब्जरस-लब्धशाश्वत-सन्तोष-
परामोदिन्! कुजनं वृन्दावनम्?
विगलिते मधुकाले प्रचलिते पुंस्कोकिले
कोकिलाकूजनं मृषाऽतिकरुणम् ॥

मनोहरस्मितशालि-श्रीकृष्ण-विलासावली
जयति माधवीमनो धिग् गोपाङ्गनाजनम् ।
कैशोरकालानुरागः पद्मपत्र-पद्मरागः
दीपयंति दलवज्रं सरोजीवनम् ॥
धिक् तं क्रूरम् अक्रूरशरणम् ।
दाशरथिर्धनुर्धरो रावणजीवनहरस्-
त्रेतायामकरोद् यो वलिहननम् ।
शूर्पणखानासाच्छेद-ताडकाजीवनोच्छेद-
खरदूषण-दूतवधादिकं कीर्ति-नाशनम् ॥
कृष्णकार्यं युगे युये प्रेमघातनम्
सीतापातालगमनं किमु विना कारणम् ॥

कृष्णसख ! मन्त्रिवर !

मा कुरु मा कुरु कृष्णगुणोच्चारणम्
मथुरानाथवन्धो मा कुरु कृष्णगुण-ख्यापनम् ॥

वृन्दा । सत्यं मन्त्रिश्रेष्ठ । एष एव श्रीकृष्णो वामनावतारे बलेर्वलिं काकवद् भक्षयित्वा पुनर्वलिं ववन्ध । एतादृशस्य महाजनस्य मैत्रीवन्धनेन किम् ?

उद्धवः । गोपरमणी-शिरोमणे ! तादृशश्चेद् युष्माकं मनोभावः कथं नित्यं तस्य यशोगाथां गायथ ?

वृन्दा ।

मन्त्रिवर ! मदुत्तरे देहि अवधानम् ।
कृष्णकथापरिहारः परमदुष्कर ।
तच्चरितकथामृत-कणिकामात्र-पानतः
रागद्वेषौ त्यजति क्षणेन धीरः ॥
सरोवरे हंससम पालित-सर्वनियमः
सदसद् विवेकोद्गमदृष्ट-पारावारः ।

धन-पुत्र-दारत्यागी विषयभोगविरागी
जीवति कङ्कालसारो दिव्यविभाधरः।
श्रीकृष्णादरो वन्धो महाभयङ्करः।

उद्धवः। तथापि किमिति भवत्यः श्रीकृष्णादरं बहुमन्यन्ते।

वृन्दा। मन्त्रिवर! प्रेमप्रवाह ईदृशं वलं धत्ते यत् निमज्जितां चेतो-वेतसलतां सर्वदा करोति निम्नाभिमुखाम्। भूयोऽपि पश्यतु भवान्, शलभा जानन्ति किलाग्निपतने साक्षान्मृत्युं, तथापि तदभिमुखा भवन्ति। हरिणयो व्याधसङ्गीते दत्तावधानाः कालग्रासं यान्ति।

तच्चाटूक्तिवशीकृतास्तदनृतप्रेमासवोद्वेजिता
वाला गोपपुरन्ध्रयो धूर्तेन किं वञ्चिताः?
जानीयाम विमुग्धकोमलहृदो यद्यस्य हा कैतवं
कुर्याम प्रदिशे नमः शठशिरोरत्नस्य तस्यै वयम्॥

विशाखा। श्रीकृष्णसख! अप्यस्मान् मथुरापुरीं नेतुं प्रेषितोऽसि? तथा सति—श्रीकृष्णमस्मन्नाम्नावेदय—अन्यललनासमासक्त-चित्तसमीपे कथं वयं गच्छामः। अपि नाथो मधुपुर्यां तिष्ठति? किं स गोपाङ्गनाविषयकं किमपि स्मरति? अथवा क्व वा मथुरानगर्यः, कुत्र वा वयं सरलानाडम्बर-जीवन-यापनव्याकुला गोपनार्यः?

उद्धवः। दत्तप्राणा भगवति हरौ यूयमेकान्तधन्या
आत्मारामा यमनियमतो यं समाधौ लभन्ते।
पाशानन्यान् पतिसुतमुखान् न्यस्य कृष्णैकपाशा
यज्जातास्तत सफलमिह वो जन्म गोपाङ्गनानाम्॥

भवतीनां दर्शनं मया लब्धमिति आत्मानं सार्थकजन्मानं मन्ये। सत्यं प्रेम यथा दुर्लभं तथा तन्मनस्कतयात्मसमर्पणाच्च सर्वत्रैव—यथा यथार्थ-प्रेमिकः, तथैव यथार्थप्रेमिका।

प्रायेण दृश्यते कालुष्यं, मालिन्यं, घोरपङ्किलता। इह भवतीनां दर्शनेन सत्यमेव जातो मे दिव्य-दर्शनलाभः।

श्रीकृष्णप्रभोः सन्देशोऽपि मयाऽऽनीतः, कृपया तं शृणुत।

वृन्दा। त्वरितं ब्रूहि, भृशं श्रवणोत्कण्ठिता वयम्।

उद्धवः। भगवान युष्मानेतं सन्देशं प्रेषितवान्—

वियोगो युष्माभिर्न हि खलु कदाचिन्मम भवेद्
यतोऽहं सर्वेषां हृदयशरणोऽस्म्यान्तरतमः।
अयं यो विच्छेदः समजनि मया साकमिह वः
स न स्थायी दीर्घं समयमिति धैर्यं न जहित ॥

किञ्च।

दूरं गते प्रियजने स्मरणप्रणाल्या
प्रीतिर्यथा हृदि करोति पदं प्रगाढम्।
नैवं भवेत् सततसन्निहिते हि तस्मि-
न्नित्यस्मि नेत्रसरणेरिह वो विदूरे ॥

तस्मात् सर्वत्यागकारिणीनां गोपाङ्गनानां युष्माकं प्रबलाभिनिवेशवशान् मय्येव नित्यस्थितिः। अत एव रासप्रसङ्गे या रमण्यः परिवारजनैः प्रतिरुद्धा मत्सन्निकर्षं नागतवत्यस्ता अपि ध्यानबलान् मां प्राप्तवत्य एव।

वृन्दा। मन्त्रिवर! वयं गोपरमण्यः सरला अबलाः—यथा प्रतिबोधयसि अस्मान, तथा वयं बुध्यामहे। यद्वा तद्वा भवतु,

वयमपगतचिन्ताः कंसराजप्रणाशाद्
गुरुविपदुदधेश्चोत्तीर्णमाकर्ण्य कृष्णम्।
हृदयमिदमपूर्वं वस्तु सीमन्तिनीनां
न हि खलु समुपेक्ष्यं वाच्यमेतत्तु तस्मै ॥

विशाखा। भूयोऽपि मया निवेद्यते—यथा कथञ्चनास्माकं दुःखलाघवे सञ्जातेऽपि किं भविष्यति श्रीराधायाः? सा कथं जीविष्यति? स्वचक्षुर्भ्यां तां दीनां पश्य, तत उपदेशवाणीं प्रचारय।

उद्धवः। गोपरमण्यः! युष्मभ्यमुपदेशदानाय नास्ति मे शक्तिः। श्रीकृष्णसन्देशस्य वाहकोऽहं युष्मान् कथितवान् तस्य वार्ताम्। केवलं प्रार्थये श्रीकृष्णस्य वचः प्रत्यक्षरमनुसरणीयम्—तेनैव सर्वासां वो मङ्गलं भविता।

वृन्दा। मन्त्रिवर! नास्मत्कृते, परन्तु श्रीराधायाः प्राणसंरक्षणाय श्रीकृष्णसकाशे मयाऽवश्यमेव गन्तव्यम्। सकृद्वृन्दावना-गमनं नाथस्यैकान्तमपेक्षितम्।

अहो राधा श्रीकृष्णचैतन्या—कृष्णनाम्ना जागर्ति, कृष्ण-मदृष्ट्वा मुह्यति, 'कृष्ण कृष्ण' इति निरन्तर-रोदनकारिणी धरणीमपि विप्लावयति। तत्त्ववाणी न तस्या हिताय भविष्यति। विशाखे! अहं श्व एव यास्यामि मथुराम्। प्रत्यावर्तनकालपर्यन्तं श्रीराधा-सान्त्वनव्यापारो युष्माकं करे न्यस्यते। ध्रुवमेवाहं सफलकामा भविष्यामि।

विशाखा। सखि! निर्बाध-निर्भयं गच्छ। वृन्दावनप्राणधन-श्रीकृष्णेन सहाचिरात पुनरागच्छ।

उद्धवः। तन्मे परमानन्दाय भविष्यति।

(सर्वे निष्क्रान्ताः)

—०—

## दशमोऽङ्कः

### माथुर-विरहः

(सखीनां विलापः)

प्रविशति राधा, वृन्दा, ललिता, विशाखा, चम्पकलतिका, तुङ्गविद्या च।

धानसी

राधा।

माधवी-लतिकामूले विश्वविस्मरणाच्छले

योगिसम-नित्यध्यानरतः।

राधे-राधे-राधे-ध्वनि- मुखर-मुरली-धनी
स मथुरा-नगरप्रोषितः ॥
राधा प्रिया-प्रियसङ्ग-कलित-कौतुकरङ्ग-
कुसुम-चयन-नित्यप्रसङ्गः ।
नवकिशलय-दल-सुखशय्या-परिमल-
लसत्कृष्ण उच्छल हृत्-तरङ्गः ॥
श्रीराधा-दर्शनोल्लासः शयन-स्वप्नविलासः
यापित-विनिद्र-रजनिः ।
गुणाधर-रसराज- मथुरामण्डलराजः
राधिकास्मरणलब्धो वृन्दावनमणिः ।
निष्ठुरो मे प्रियराजः
विगतविरहव्यथो राधाप्राणमणिः ॥
विस्मृत-राधिकामुख-माधुरी-दर्शनसुख-
वृन्दावनकेलिराजो मम प्राणमणिः
राधाविस्मरणसुखः कृष्णः प्राणमणिः ॥

वृन्दा । (राधिकामुद्दिश्य) सखि ! मथुरायां गन्तुमहमभिलषामि । अहं विश्वसिमि राजसुखभोगनिरतमपि वृन्दावन-चन्द्रमत्रानेतुं शक्ष्यामीति ।

राधा । किन्तु कथं स पुनरागमिष्यति ।

ललिता । प्रथमप्रणय एव प्रणयः । अनुवर्तिनः सर्वे प्रणयाः प्रयोजन-मूलकाः । विशेषतः पुनः

सैवेयं यमुना चिरात् परिचिता सोऽयं कदम्बद्रुमः
सा राधा त्वमसीह सा च मधुरा वानीरकुञ्जावलिः ।
तत्तत् प्राक् प्रणयास्पदं कथमसौ विस्मर्तुमीष्टे त्वया-
देष्यामीति यदाश्रुतं तदपि न क्रूरः क्वचिद् ध्यायति ? ॥

राधा। प्रणयदिवसे प्रणयावेशे प्रचारिता प्रियप्राणवाणी।
नवनवाकारा नित्य-मधुरा निन्दित-नवनीत-लावणी॥
कृतशत-शपथः प्रमुग्ध-लुब्ध-नाथ
तिरोहितदेहमनोभेदः।
लुलिताश्रुधार-त्रोटि-मुक्ताहार उद्वेलितदुर्निवारखेदः
स प्रियोऽद्य प्रियसखि
लेशमात्रं न हि दुःखी
विस्मृतबाल्यस्मृतिश्रेणिः
पान्थपथोपरि चुम्बक-च्युतमञ्जरी
माधवी हासोल्लासिनी।
वसन्त-कोकिलगण-गुण-गुणसुगुञ्जरन-
रत-मधुकरकोटिकशोभिनी॥
का हि मथुरा पुरी का नाम सा नगरी
गुणवद्धमाधवधनिनी।
क्व प्रियसखि वद राधिका हृदयोन्मादः
कथं न ध्वनति "राधा विनोदिनी"॥
रे विशाखे! रे ललिते, प्राणसखि वृन्दे-
प्रियसङ्गं मे आनयत। प्राणान् मेऽवत।

वृन्दा। देवि राधे! धैर्यमवलम्बस्व। दुःखं कदापि न चिरस्थायि।

ललिता। वृन्दे! त्वं त्वरितं गच्छ, आनय राधाप्राणनाथम्।

वृन्दा।

प्राणनाथ! दारुणा दैवदुर्विलासाः
सिन्धुतीरनिवासा सदाकण्ठपिपासा।
तस्या दुःखं को हरति, नित्य-जिज्ञासा।
मुण्डितमस्तककेशा विधृत-योगिनीवेशा
भ्रमिष्यामि देशान्तरं प्रियहताशा॥

व्यर्थं मम जीवनं व्यर्थं च रूपधनं
सुवर्णमुद्रा भाग्यदोषात् काचसङ्काशा ।
भसितविभूषिता गैरिक-परिहिता
शङ्ख-कुण्डलैक-करा ।
योगिनी-वेश-धरा लोके पश्यामि भ्रमणपरा
का सा मधुमयी पुरी श्रीहरिहरा ॥
अपि सा मथुरा नगरी ?
मथुरानगरे गृहे गृहान्तरे
भ्रमिष्यामि योगसारा ।
प्रासादे प्रान्तरे कुटी-कुञ्ज्यन्तरे
श्रीकृष्णबन्धनपरा ॥
निगडवद्धकरम् बान्धवप्रेमसरसा
आनेष्यामि व्रजपुरं
नाथं चित्तवित्तहरं कृष्णविवशा ॥
गुञ्जितमधु पुरं कृष्णविवशा ।
घटते यदि बाधा वीताशा
त्यक्त्वा जीवनधनं मरणे लज्जसे जीवनं
अन्या भविष्यति नारीवधदोषा ॥
यतीन्द्रविमलो दुराशाव्याकुलो
भणति कातरं राधा जगदाशा ।
निरन्तररोदन-श्रावणघनवर्षण-
वारिधारा दुराधारा बाधा सर्वनाशा ॥

श्रीराधा। सखि! न वयं कदापि कस्यचनानिष्टं विदध्मः। कथं भगवानकारणमस्माकमपकारं विदध्यात्। अथवा स एव कृष्णः, यः प्रत्यावर्तनकाले पुनः पुनः प्रणमणे लक्ष्मीत्यादि प्रियवाक्यशतानि समुच्चार्य दीर्घमलपत ।

अये ! कदम्बतले कालिन्दी-पवित्रजलस्पर्शनपूर्वकं कृताः सर्वे शपथा जाता वृथा ? अद्यापि आवयोः सर्वेषाम् आलपनानां साक्षिणो वर्तन्ते वृन्दावनस्थलीशुकसारिका-कोकिल-भ्रमर-कपोताः प्रेमपक्षिणः ।

क्षालं क्षालं मम नयनयोरुद्गतामश्रुधारां
क्षामं क्षामं यदलपदहो स्निग्धमुग्धाक्षराणि ।
तन्मे चेतो ज्वलयति, पुनर्भावि-विच्छेदचिन्ता-
म्लानं तस्याननमपि मनो विस्मरेद्वा कथं मे ॥

वृन्दा । सखि प्राणसखि ! मा विलप । यथा प्राणकृष्णो झटित्येव प्रत्यावर्तेत, तदर्थमहं स्वयमद्य मथुरापुरं यामि ।

श्रीराधा । सखि ! श्रीकृष्णसकाशे करुणं निभृतं वद—हे नाथ, हे दयित, हे वसुधैकवन्धो, गोपाल हे, चपल हे, रमशारदेन्दो, हे करुणैकसिन्धो, हे प्राणाभिराम ! कदा नु नयनपथवर्ती भविष्यसि ?

नाथ ! करलेखनी नयनमसीपात्रसंयोगात् हृदयकागदे निरन्तरं लिखन्ती श्रान्ता क्लान्ताऽस्मि । अहं सैव, तवैव राधा, यस्या नयनयुगले वारिविन्दुं पश्यन त्वं सहस्रशो वस्त्राञ्चलेन वदनमण्डलमपावयः ।

विशाखा । प्रियसखि ! धैर्यं धर, धैर्यं धर, वृन्दाऽचिरात् कृष्णं तव समीपम् आनेष्यति ।

वृन्दा । तदहं यामि । विशाखे ! ललिते ! युवां प्राणसख्या जीवनं संरक्षणाय यतेयाथां न यावदहं प्रत्यावर्ते ।

—०—

## एकादशोऽङ्कः

( प्रविशति उन्मत्तप्राया यशोदा )

यशोदा। पुत्र प्राणधन ! कृष्ण ! वलराम ! युवाम् आगच्छतम्। धन्या सा माता, यस्याः पुत्रः कंससूदनः कृष्णः। श्रीदाम-सुदाम-सुवलाः ! युष्माकं क्रीडासङ्गिना कृष्णेन सह नवनीतादि-भक्षणायागच्छत। ( सवितर्कम् )

गतश्चिरं चारयितुं वने गा
निवर्ततेऽद्यापि कथं न कृष्णः।
सुदीर्घकालं स हि मामदृष्ट्वा
नैवं पुरा जातु चिरायते स्म ॥

मातृस्नेहं मम पुत्रः सर्वस्वं मन्यते। हे अञ्चलनिधे ! देहहृदयग्रन्थिर्मे छिद्यते, गोष्ठात् प्रत्यावर्तस्व।

अये सुवलो मे याति, सुवल ! सुवल !

( सुवलः प्रविशति )

सुवलः। जननि ! भवतीं साष्टाङ्गं प्रणमामि।

यशोदा। पुत्र ! कथमेकाकी प्रत्यावर्तसे गोष्ठात्। कुत्र गतास्ते रामकृष्णमुख्याः क्रीडासङ्गिनः ? मया संरक्षितं मम हृदय-मर्माधिकं नवनीतक्षीरादिकम्। कुत्र वा कृष्णः ? शीघ्रं तमानय। मातृसकाशे पुत्रनामधेयं वस्तु कीदृशमिति यूयं न जानीथ।

नारी राधापि जानीयात् न वा, तनयविरहात् कीदृशी दुरपनेया ज्वाला अन्तर्ज्वालं मां दहति। अथवा कुत्र वा राधा !

सुवलः। ( स्वगतम् )

कष्टं स्नेहमयी माता प्रमत्ता पुत्रशोकतः।
यद्वेदृश्यामवस्थायां सुखाय किल विस्मृतिः ॥

हा कष्टम् ! कथं न कृष्णो वृन्दावनं पुनरायाति ? अहो स्नेहवद्धौ पितरौ ! युवयोर्दुःखं विशेषेणास्मान् करोति कातरान् ।

( यशोदामुद्दिश्य ) मातः ! श्रीराधाऽचिराद् भवत्याः समीपे आगमिष्यति । श्रीमती वृन्दा श्रीकृष्णस्य मातृदर्शन-संघटनाय वद्धपरिकरास्ते । सा कृष्णमपि त्वत्सकाशमविलम्बम् आनेष्यति ।

यशोदा । वृन्दा ! का वृन्दा ? सा कुत्र गता ? विगत-यामिन्यां स्वप्ने सा कृष्णं व्याकुलं भर्त्सयन्तीव दृष्टा । कुत्र सा ? अहं तां द्रष्टुमिच्छामि ।

सुवलः । मातः ! राधामहमानेष्यामि, श्रीकृष्णं च वृन्दा । अदूरे पिताऽपि आगच्छन्निह दृश्यते । मातः ! भवती क्षणं तिष्ठतु ; राधिकया सहाहं पुनरावर्तिष्ये ।

मातः ! सन्तानोऽहं मातृसकाशे का स्यान्मे सान्त्वनावाणी ।

अथवा युष्माकं जन्म वसुधायाः पापभारहरणाय । तत्र भवादृशीनां चक्षुर्वारि केवलं पावित्र्यकारणम् । मातः ! धूपयष्टिवदन्तर्दाहक्रमेण आत्मानं जगदर्थम् उत्सृजेः— ईदृश्येव युष्मादृशीनां नियता परिणतिः ।

( उद्भ्रान्तः प्रविशति नन्दः )

नन्दः । ( श्रीयशोदामुद्दिश्य ) प्रिये ! कथमेकाकिनी तिष्ठसि ।

पुत्रस्ते क्व गतो बलः क्व च कथं धिङ् नीरवा धेनवो
बालाः किं न ममोल्लसन्ति परितः क्रीडारसामोदिनः ।
राधाकृष्णगुणानुवादमुखरास्तब्धा विहङ्गाः कथं
किं वृन्दावनवासिनोऽश्रुमलिना जाताः सुदामादयः ॥

यशोदे ! मातरि जीवन्त्यां पुत्राणां दुःखं कदापि न

सम्भवति। पिता केवलं सान्त्वनाकारणं, लालन-पालन-भरणपोषण-रक्षणावेक्षणादिकं सर्वं मातरमपेक्षते।

यशोदा। (उच्चैः) हे कृष्ण, गोपाल, व्रजबाल, हे चिरचञ्चल! चिरं त्वां लालयित्वाऽपि अद्याहं तवादर्शनादेतादृशीं दुरवस्थाम् अनुभवामि। तव मातुर्मे कथमीदृशी स्यात् परिणतिः?

नन्दः। (स्वगतम्) अहो मत्तोऽपि समधिककातरा कल्याणी यशोदा स्वयं सान्त्वनार्हा।

देवि यशोदे! पुत्रोऽस्माकं विश्वहितसाधनकामी सर्वेषां हिताय वृन्दावनप्रत्यागमने चिरायते। परमादरणीया माता वृन्दा तमानेतुं मथुरापुरीं गता। सार्थककामा सा निश्चितम् एक-द्व-दिनाभ्यन्तरे प्रत्यागमिष्यति।

यशोदा। (नन्दमुद्दिश्य) को वदति कृष्णो मातुर्वक्षः शून्यं कृत्वा वहिर्गत इति?

कृष्णोऽत्र नास्तीति मृषोक्तिरेषा
क्रोडे ममासावशयिष्ट रात्रौ।
श्रीराधया क्वापि गतः स नूनं
तया सहैवेष्यति तूर्णमत्र॥

सुवलः। पितरौ! वयं वृन्दावनगोकुलस्थगोपाः सर्वे युष्माकमेव सन्तानाः। युष्माकं क्रोड़देशे पुत्रकन्यावद् वयमपि शोभामहे। पितरौ! भूयोऽपि वयं जानीमहे—वृन्दावनस्थोऽपि श्रीकृष्णो भारते धर्मराज्यसंस्थापनाय यतिष्यमाणः पुनः पुनर्वहिर्गमनव्याकुलो भविष्यति, देशान्तरं यास्यति च। एतावद्विरहोऽस्माभिः सोढव्य एव।

(प्रविशति मथुराप्रत्यागता वृन्दा)

वृन्दा। (स्वागतम्) अहो निर्दयस्य अरुन्तुदमौदासीन्यम्!

काकूक्त्या वहु जल्पितं बहु पुनः सामादिभिर्वोधितं
गोपीप्रेम पुरस्कृतं कटुगिरा कुब्जारतं धिक्कृतम्।

पादस्पर्शमुपासितं विरचितं नान्यच्च किं किं मया
निर्वन्धादचलत्तथापि न मनाक् पाषाणसारः खलः ॥

अहो वृन्दाया अदूरदर्शिताप्रसूतमत्याहितम्!

निवर्तिष्ये कृष्णं न खलु न गृहीत्वा कथमपि
प्रतिज्ञातं पूर्वं यदिति पुरतः सर्वसुहृदाम्।
गते त्वेवं कुर्यां किमहमकृतार्था हतमतिः
सखीनां पित्रोर्वा मुखमपि कथं हा प्रकटये ॥

तथापि घोरान्धकारे खद्योत इवास्मिन् सङ्कटे समागतः सङ्कर्षण एव मे परमावलम्बनम्। भवतु, पितरावुपसर्पामि। (तथा कृत्वा) पितरौ युवां प्रणमामि।

नन्दः। वृन्दे, कुशलं ते? कथमासाते रामकृष्णौ?

यशोदा। किं तौ नागतौ?

वृन्दा। पितरौ! समानीतो मया मथुरातः श्रीमान् बलरामः।

नन्द-यशोदे। कुत्र, कुत्र, मे बलरामः?

(प्रविश्य) बलरामः। पितः, भवन्तम् अभिवादये, मातस्त्वामपि वन्दे।

यशोदा। वत्स, क्व ते कनिष्ठो वत्सो मे कृष्णः?

बलरामः। (स्वगतम्) हन्त किमिदानीं वक्ष्यामि?

जानामि नायास्यति जातु कृष्णो
वृन्दावनं हा मथुरां विहाय।
पित्रोः कृते गोप्यमिदन्तु सत्यं
न दुष्यति प्राणभये हि मिथ्या ॥

(प्रकाशम्) पितरौ! कृष्णो भवतोः श्रीश्रीचरणसकाशे प्रणिपातपुरःसरं मन्मुखेनेदम् उक्तवान्—यत् मथुराराजोग्रसेनानुरोधान्नाहमद्यैव मथुरां परित्यक्तुं समर्थः। सम्पादिते गुरुराज-कर्मणि अचिरादेव पुनरागमिष्यामि। किञ्च, मद्वियोगव्यथामुपशमयितुं भवतोश्चरणौ सेवयितुञ्चाग्रजो

हलधरो भवतोः समीपे प्रेष्यते। स एव चिरं तत्र स्थित्वा भवतोरन्येषां गोकुलवासिनाञ्चानन्दसन्दोहं जनयिष्यति। भवतोश्चरणयोः पुनरपि भूयो भूयः प्रणम्यान्ते इदं विज्ञापयामि—

कालोऽयं बलवान् कलेवरभृतः संयुज्य पित्रादिभिः
पश्चात्तान् वियुनक्ति बालक इव क्रीडाविधौ मृन्मयान्।
तस्माद् यूयमिमां विधूय हृदयान्मद्विप्रयोगव्यथां
शान्तास्तिष्ठथ दर्शनं मम भवेत् कालोऽनुकूलो यदा॥

यशोदा। वत्स राम, किं त्वं वदसि? क उग्रसेनः? अहं तस्य माता। मदादेशात् तं मम पुत्रं श्रीकृष्णमस्मिन्नेव क्षणे मत्सकाशम् आनय। मातृवाक्यपालनं पुत्रस्य श्रेष्ठो धर्मः। मम पुत्रो विशेषेण धर्मप्राणः। वृन्दे! वृन्दे! मम पुत्रं मम क्रोडे स्थापय। (इति रोदिति।)

रामः। मातः, प्रकृतिस्था भव। अयमहं न चिरादेव कृष्णमानेष्यामि।

ललिता। आर्य, अपि सत्यं श्रीकृष्णः पुनरागमिष्यतीति? चिरं प्रतीक्षमाणानामस्माकं हृदयं पुनरेतस्मिन् वाक्ये श्रद्धां न दधाति।

तदर्थमस्माकम एतादृक् वैकल्यम्, स तु खलो मन्ये निराकुल एव कालं नयति। अथवा किं तदर्थं खेदेन?

वयं तस्य प्रेमास्पदमयमभून्नः प्रियतमः
स नः स्वामी दास्यः खलु वयममुष्य प्रतिजनुः।
सतीत्थं सम्बन्धे द्वितयगतकोटौ स घटते
विनास्माभिः स्थातुं यदि कथमशक्ता वयमपि॥

तदलं तस्य वार्तया। यत् पुनर्भवान् कृपया समागतस्तेन वयं कृतार्था जाताः। तद् यदि कार्यान्तरबाधा न स्यात्तर्हि

कियत्कालमत्रावस्थाय पितरावस्मांश्चानन्दयत्वार्य इत्यभ्यर्थये।

रामः। कल्याणि, अत्र काभ्यर्थना ? राधे, वृन्दे, ध्रुवमेवाहमत्र मासद्वयं स्थास्यामि। पितरौ अलं खेदेन, प्राणिनामेकत्रावस्थानं प्रायेण दुर्घटम्। अयमहं कृष्णप्रतिनिधिर्भूत्वा भवन्तौ सेविष्ये। उच्यतां किमतः परं भवतोः प्रियं करिष्यामि ?

नन्दः। किमतः परमपि प्रियमस्ति ?

प्रत्यावृत्तस्त्वमसि कुशली यत् परं दीर्घकाला-
ल्लब्धा सम्यग् यदभिलषिता वत्स-कृष्णस्य वार्ता।
प्रेक्ष्यन्ते यद् व्रजजनमुखान्यद्य फुल्लानि हर्षात्
प्रेयः स्यान्मे किमधिकमतो वत्स याच्योऽसि यत्त्वम्॥

स्नेहकातरे कृष्णमातः! शृणु। धर्मैकप्राणस्य पुत्रस्य तव उक्तिर्विसंवादविहीना ध्रुवसत्ये परिणमिष्यति।

रामः। कल्याणि वृन्दे! तवैव श्रमगुणात् गोकुलस्य दुःखं किञ्चिदपगतम्। देवि राधे! तव दुःखमसहनीयं ध्रुवमेव। तथापि विश्वस्य शाश्वतानन्दरूपेण चिरं राजस्व। राधे त्वं यदि कातरा जायसे, जगत् दुःखार्तं तमोवृतं भविष्यति।

नन्दः। आनन्दस्वरूपे राधे! आनन्दं विस्तारय। वत्साः सुबलादयः कृष्णप्रत्यागमनं सुनिश्चितमेव। अन्यत् किमपि युष्माकं कृते कर्तुं शक्नोमि ?

राधा। पितः! इतोऽपि किं कल्याणमास्ते ? तथापि इत्थं भवतु (भरतवाक्यम्)—

संहाराख्याणां दानविकविक्रमः
प्रयातु प्रशमनं भगवतः प्रसादात्।
श्रीश्रीकृष्णार्चनरतं भवतु विश्व
राजतां चिरं सुखं पूर्णा च शान्तिः॥

आनन्दामृत-प्रेमझङ्कृत-वाणी ध्वनतु भुवने ।
तरङ्ग-भङ्गे रस-रसरङ्गे मधु क्षरतु पवने ॥
सुनीलाम्बरे नीपडम्बरे हरिततमालवने ।
जननीशोभा मानसलोभा लसतु वृन्दावने ॥
पापशतहारि मानसविहारि जयतु कृष्णनाम ।
क्षेमप्रसारि सुधासञ्चारि मधुर-गोकुलधाम ॥
मायाविदारि-विमोचनकारि-करुणाकर-श्यामः ।
श्रीपदधारी नन्दनचारी जयतु भक्तिकामः ॥

समाप्तोऽयं ग्रन्थः ॥

—o—